॥ श्रीः ॥

# प्रस्तावना

*भारतभूमेः मृत्तिका शिरसा वन्द्या* इति वदन्ति । तच्च वन्द्यत्वं न केवलं संकेतरूपम् ; परन्तु शंकर, रामानुज, मध्व प्रभृतिभिः ज्ञानिवरेण्यैः प्रचारितशास्त्रसम्पदा परिपूरणेनापि । पुण्यतमत्वाच्च एषा भरतभूमिः सर्वैः वन्द्या । उक्तं च पुण्यभूमित्वमस्या अमरसिंहप्रभृतिभिः कोशकारैः *आर्यावर्तः पुण्यभूमिः* इति । एतस्यां च पुण्यभूमौ प्रवृत्तानि नैकानि शास्त्राणि ; प्रवर्त्तितानि च नैकैराचार्यैः । परन्तु सर्वस्याप्यस्य मतगुम्फस्य मूलं तावत् वेदवाङ्मयम् ; यस्याधारेण एतन्मतजातमुज्जीवति तत्रान्यतमानि वेदान्तशास्त्राणि हि सामान्यतः सूत्रोपनिषद्गीतादिरूपग्रन्थानवलम्ब्यैव प्रवृत्तानि दरीदृश्यन्ते । न हि यत्किमपि वेदान्तमतं उक्तमूलग्रन्थरहितं दृष्टचरम् । सर्वेषामेषां मूलं वेदवाङ्मयम् । तच्च इयदेवेति परिमातुमशक्यं अवोचि वेदेनैव *अनन्ता वै वेदाः* इति । परन्तु अल्पमेधसोऽस्मान् अवलोक्य परमकरुणालुः भगवान् पराशरात्मजो द्वैपायनकृष्णः तान् वेदान् सांकेतिकतया विभज्य चत्वारो वेदाः इति जगाद । यतोऽयं व्यस्तवान् वेदान्, व्यासः इत्येव प्रथामाप लोके । ते च वेदाः प्रथिता चतुर्भिः नामभिः *ऋग्यजुस्सामाथर्वभिः* इति । तत्रापि सन्त्यनेके शाखाभेदाः प्रतिविभागम् । यथा वा ऋग्वेदे शाकलबाष्कलादयः ; यजुषि तैत्तिरीय - कठ - मैत्रायणीयादयः ; साम्नि राणायनीय - शाट्यायनीय प्रभृतयः । अनेकेषां एषां वेदानां प्रतिवेदं सामान्यतः विभागश्चतुर्धा विहितः - संहिता, ब्राह्मणम्, आरण्यकम् , उपनिषद् इति । उपनिषदां आरण्यकेष्वेव अन्तर्भावाभिप्रायेण त्रय एव प्रभेदाः परिगणिताः कैश्चित् । वेदविभागे परन्तु संहितान्ते, ब्राह्मणान्तेऽपि उपनिषदां पाठात् आरण्यक एवान्तर्भाव इति नास्ति नियमः । अन्तिमे आरण्यकादौ अन्तर्गतत्त्वाद्वा अन्तिमप्रभेदत्वाद्वा वेदान्तत्वं आसां उपनिषदाम् । यथा वेदाः अनन्ताः तथैवानन्ता उपनिषदः । तथापि अष्टोत्तरशतोपनिषदां संग्रहः कृतः दृश्यते । तास्वपि प्राधान्यं दशानामेव । ते च संगृहीताः मुक्तिकोपनिषदि । तथा हि -

'ईश केन कठ प्रश्न मुण्ड माण्डूक्य तित्तिरिः ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा' ॥ इति ।

आभिः साकं सुबाल - श्वेताश्वतर - कौषीतकिनां अपि प्राधान्यं पर्यगणि आचार्यरामानुजैः । लोके प्रसिद्धास्तावत् दशोपनिषदः ।

### उपनिषच्छब्दार्थः

एवं लोकप्रसिद्धस्यास्य उपनिषच्छब्दस्य कोऽर्थः । यतो हि ; उपनिषत्सु क्वचित् रहस्यं इत्यर्थे उपनिषत् शब्दः प्रयुज्यते । क्वचित् ग्रन्थसमाप्तौ *एषा वेदोपनिषत् , इत्युपनिषत्* इति प्रयोगदर्शनात् ग्रन्थ इत्यर्थो भवति । क्वचित् *उपनिषदमब्रूम* इति श्रवणात् रहस्यार्थ इति अर्थो भवति । तस्मात् कोऽर्थः इति चेत् गहने हीयं विद्या उपनिषण्णा इति वाक्यकारवाक्यम् । गहने = दुर्ज्ञेये ब्रह्मणि इयं विद्या उप + निषण्णा = इयमेव विद्या अत्यन्तं साक्षात् ब्रह्मणि वर्तते इति, ब्रह्मविद्या - उपनिषच्छब्दार्थः । तत्प्रतिपादकवाक्यसमुदायात्मकग्रन्थोऽपि उपनिषच्छब्दार्थः । अत्र अनेके पाश्चात्यविद्वांसः एवं अभिप्रयन्ति । *हाप्किन्स्* नामकः विद्वान् उपनिषदां वेदाधीनत्वात् उपनिषच्छब्दस्य *अधीनग्रन्थः* इति अर्थं अभिप्रैति । *ओल्डन् बर्ग्* नामकः *उपनिषच्छब्दः ध्यानम्* अथवा *पूजा* इत्यर्थं वदतीत्यवोचत् । देवस्य समीपे उपविश्य ध्यानपूजादीनां अनुष्ठीयमानत्वात् इति तस्य आशयः । *रहसि उपवेशनं* इतीममर्थं वदति *ढायिसन्* महाभागः । भगवत्पादशङ्करास्तु, रहस्यवस्तुज्ञानबोधिनी विद्या इत्याहुः । एवञ्च उपनिषच्छब्दस्य मथितार्थस्तु ; गुरुकुले प्रियशिष्याय रहसि गुरुणा उपदिश्यमाना विद्या एव उपनिषदित्युच्यते । अवयवनिष्पत्त्या अयमर्थः सुविदितो भवति । उप.नि. इत्युपसर्गद्वयपूर्वकात् षदेः धातोः क्विपि रूपमिदुपनिषदिति । उपनिषत् श्रवणादिना वैराग्यं प्राप्य ब्रह्मप्रेप्सुना तपश्चर्यते । विशीर्यते च तदा तदीयं कर्म । एवं विशरण-साधनत्वात् अपि उपनिषत्त्वम् । गुरुकुलवासान्ते गुरुणा स्वसमीपे शिष्यमुपवेश्य दीयमान-रहस्योपासनोपदेश एव उपनिषदित्यत्र तैत्तिरीयोपनिषदेव प्रमाणम् । तत्र हि शिक्षावल्ल्यां दशमानुवाके *वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति* इत्यारभ्य *एषा वेदोपनिषत्* इत्युक्तं दृश्यते । पदस्यास्य विशिष्टतया अर्थः न्यरूपि श्रीव्यासार्यापरनामधेयवद्भिः श्रुतप्रकाशिकाचार्यैः *गहने ब्रह्मणि उपनिषण्णेत्युपनिषत्* इति । समस्तवेदवाच्यत्वस्य परब्रह्मनिष्ठत्वप्रतिपादकत्वात् उपनिषत्त्वं उपनिषदां इति एतेषामाशयः । एवञ्च उपनिषन्नाम गुरुणा शिष्याय अन्तिमतया दीयमानः ब्रह्मोपदेश एव स च वेदाद्यधीनः, जपाद्यनुष्ठानोपयोगी, वैराग्यजनकः, ब्रह्मज्ञान-प्रयोजकश्चेति समेषां महाभागानां अर्थोऽपि युज्यत एव उपनिषच्छब्दस्य ।

### उपनिषदां शान्तिपाठः

एकैकस्मिन्नपि वेदे सन्ति अनेका उपनिषदः । तत्र एकैकवेदगताया उपनिषदः एकैकः शान्तिमन्त्रः पठ्यते । कौषीतकि - ऐतरेयप्रभृतीनां दशानां ऋगुपनिषदां *वाङ्मे मनसि प्रतिष्ठिता*

इति मन्त्रः शान्तिमन्त्रत्वेन पठ्यते। मन्त्रोऽयं ऐतरेयोपनिषदि एकत्र उपनिषत्त्वेनाऽपि पठ्यते इति अस्य वैशिष्ट्यम्। कठ - तैत्तिरीय - श्वेताश्वतरप्रभृतीनां कृष्णयजुर्वेदीयानां द्वात्रिंशदुपनिषदां *सह नाववतु* इत्ययं शान्तिमन्त्रः। शुक्लयजुर्वेदीयानां ईश - बृहदारण्यकादीनां एकोनविंशतीनां *पूर्णमदः* इत्यादिः शान्तिमन्त्रः। साम्नां षोडशानां केन - छान्दोग्यादीनां *आप्यायन्तु ममाङ्गानि* इत्यादिकः शान्तिपाठः। आथर्वणिकानां च एकत्रिंशतां मुण्डक - माण्डूक्य - प्रश्नादीनां उपनिषदां पठ्यते शान्तिमन्त्रः *भद्रं कर्णेभिः* इतयादिरूपः।

## औपनिषदः बोधक्रमः

विषयमेकं निरूपयितुं नैके प्रकारा भवन्ति। विधिः, निषेधः, आख्यायिका, फलाभिरुचि-मूला, प्रश्नोत्तरी इत्यादयः ताः प्रकाराः। एतदेवमेव कार्यमिति विधिः। नैवं कार्यमिति वचने निषेधः। कथामेकां निरूप्य तन्मूलकतया तत्त्वनिरूपणं आख्यायिका। फलं उक्त्वा तत्र अभिरुचिं उत्पाद्य तद्द्वारा तत्त्वविचारे आभिमुख्यसम्पादनं फलाभिरुचिः। शिष्येन पृष्टस्य प्रश्नस्य उत्तर-रूपेण विषयनिरूपणं हि प्रश्नोत्तरी। एकैकस्मिन्नुपनिषदि यथायोग्यं एते प्रकाराः उपयोजिताः दृश्यन्ते। यथा वा ईशावास्ये *कुर्वन्नेवेह कर्माणि* इत्यादौ विधिः दृश्यते। *मा गृधः कस्य स्विद्धनम्* इत्यत्र निषेधः वरीवर्ति। छान्दोग्ये अनेकानां तत्त्वानां निरूपणार्थं आख्यायिकाः उपयुक्ताः सन्ति। तथैव अनेकविद्यासु फलनिरूपणपुरस्सरं विचारप्रस्तावेन फलाभिरुचिप्रकारः निरूपितः। आचार्यपिप्पलादस्य सविधे भारद्वाजसुकेशादीनां प्रश्नस्य उत्तररूपेण प्रवृत्ता नाम्नाऽपि प्रश्नोप-निषदित्येव प्रथिता प्रश्नोत्तर्याः दृष्टान्तभूता। एवं उपनिषत् यथोचितं प्रकारमेकं अनुसृत्य विषयं निरूपयति। प्रकृते प्राकाश्यमाना ऐतरेयोपनिषत् फलाभिरुचिप्रकारं बहुधा उपयुज्य विषयं निरूपयति। एतस्या उपनिषदः भागाः काश्चन गद्यात्मकाः काश्चन पद्यात्मकाः, उभयात्मकाश्च। ईशादिकं पद्यात्मकं चेत् छान्दोग्य प्रभृति गद्यात्मकम्। उभयात्मकं केनादिकम्। प्रकृते ऐतरेयं तु गद्यात्मकं दृश्यते। ऐतरेयेऽपि उक्तविध्यादिषु आख्यायिकाऽपि दृश्यते। परन्तु अधिकतरं फलाभिरुचिप्रकार एव दरीदृश्यते।

सामान्यतः उपनिषत्सु ब्रह्मविद्या निरूप्यते। कासुचित् तदनुबन्धतया जगत्सृष्ट्यादि-विचारः, उपासनाप्रकाराः तथा होमादिविधानादिकं च दृश्यते। कासुचित् जगत्सृष्ट्यादिविचारं विहाय केवलं उपासनादिक्रमश्च निरूप्यते। क्वचित् ब्रह्मविद्यायाः निरूपणं केवलं दृश्यते। परन्तु ब्रह्मविद्यायाः निरूपणं विना न काऽप्युपनिषदस्तीत्युक्तौ नातिशयोक्तिः।

## उपनिषत्सु स्त्रीणां स्थानम्

[1] *यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः॥*
इति प्राह धर्मशास्त्रकारो मनुः। लोकेऽस्मिन् स्त्रीणां महत्त्वपूर्णं स्थानं दत्तमस्ति। न हि केवलं

1. मनुस्मृतिः ३ - ५६

लोके ; उपनिषत्स्वपि उत्तमस्त्रीणां ज्ञानिवर्गगणनं दृश्यते । ननु [1]*स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम् ॥* इत्युक्तेः कथं स्त्रीणां वेदाधिकारः कथन्तरां च उपनिषदाद्यध्ययनेन ज्ञानिवर्गगणनमिति चेत्सत्यम् ; समेषां स्त्रीणां न वेदाद्यधिकारः । परन्तु उत्तमस्त्रीणां तु विद्यते अधिकारः । उक्तं च ; [2]*आहुरप्युत्तमस्त्रीणां अधिकारं तु वैदिके । यथोर्वशी यमी चैव शच्याद्याश्च तथापराः ॥* इति । एवं केषांचित् उत्तमस्त्रीणां शची, यमी, ऊर्वशी, गार्गी, वाचक्नवी, वडवा, प्रातिथेयी, सुलभा, मैत्रेयी प्रभृतीनां वेदाधिकारः श्रूयते । प्रसिद्धश्च वाजसनेयके मैत्रेयीयाज्ञवल्क्यसंवादः । एवं च स्त्रियोऽपि उपनिषत्तत्त्वज्ञानिनः आसन् इति ज्ञायते एव । तेषामपि आसीत् महत्त्वपूर्णं स्थानमिति ज्ञायते । याज्ञवल्क्यमैत्रेयीसंवादरूपायां मैत्रेयीविद्यायां संसारमोचनाय प्रियपत्न्याः मैत्रेय्याः आत्मतत्त्वोपदेशः विहितो याज्ञवल्क्येन ; इति श्रूयते । अग्रे च ; जनकसभायां याज्ञवल्क्यं प्रति तदन्तेवासिनी गार्गी वाचक्नवी ; *यदूर्ध्वं याज्ञवल्क्य, दिवो यदर्वाक् पृथिव्याः, यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च, भविष्यच्च इत्याचक्षते । कस्मिंस्तदोतं च प्रोतं च इति ।* इति प्रथमः प्रश्नः कृतः । तस्योत्तरं *आकाश एव तदोतं च प्रोतं च* इत्युत्तरं दत्तं याज्ञवल्क्येन । पुनरकारि प्रश्नः गार्ग्या वाचक्नव्या, *कस्मिन्नु खलु आकाश ओतश्च प्रोतश्च* इति । तस्य तावद्याज्ञवल्क्येन *एतस्य वा अक्षरस्य प्रशासने गार्गि* इत्यारभ्य, *एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च* इत्यन्तेन उत्तरं दत्तम् दृश्यते । एवं तदानीन्तनकालेऽपि राजसभायामेव पर्यनुयुञ्जानाः आसन् स्त्रियः । एवं उपनिषत्सु महान्तं स्थानं समस्ति स्त्रीणाम् ।

## उपनिषत्सु ऐतरेयस्य स्थानम्

सूत्रप्रस्थाने उद्धृतैः उपनिषदीयवाक्यैः सामान्यतः उपनिषदां स्थानं परिगण्यते । छान्दोग्यबृहदारण्यकयोः अनया दृष्ट्या प्रथमं स्थानमस्ति वेदान्ते । द्वितीयं तावत् मुण्डकस्य, ऐतरेयस्य च । यतो हि सर्वैरपि ज्ञानिवरैः स्वीयभाष्यग्रन्थेषु बहुत्र उदाहृतानि अस्या वाक्यानि । उपनिषदोऽस्य सामस्त्येन आत्मविद्याबोधकत्वमित्युक्तौ नात्युक्तिः अत एवास्य *आत्मषटकम्* इत्यपि नाम ।

अस्याश्च उपनिषदः व्याख्यानेषु प्रथमं तावत् भगवत्पादशंकरविरचितं भाष्यम् । ततः परं रङ्गरामानुजमुनिविरचितं प्रकाशिकानामकम् । एतदुभयमंतरा भारद्वाजरामानुजार्यरचिता प्रतिपदार्थदीपिका, रामानन्दप्रणीतं आनन्दभाष्यम् , गोपालानन्दस्वामिप्रणीता सुबोधिनी, लक्ष्मीपुरं श्रीनिवासाचार्यप्रणीतं ऐतरेयोपनिषद्विवरणमित्यादि । एतत्सर्वं ऐतरेयैकदेशस्य आत्मषट्कस्यैव लभ्यते । मतत्रयाचार्येषु शंकरमध्वयोः भाष्यं सर्वासां उपनिषदां लभ्यते । रामानुजाचार्यैस्तु भाष्यं न कस्याऽपि व्यधायि केवलमुपनिषदां भाष्यकरणे, शाङ्करमत इव इतर भागानामनादरणं

---

1. भागवतम् - १-४-२५
2. व्योमसंहिता (मध्वभाष्ये उद्धृतम् )

स्यात् । चतुर्विधवेदभागस्य सर्वस्यापि भाष्यकरणं अतिकष्टसाध्यम् , अनतिप्रयोजनश्च । अतः वेदार्थविचारोपयोगिमार्गप्रदर्शनपरोग्रन्थः श्रीमद्रामानुजैरकारि । अत एव तस्य नाम *वेदार्थसंग्रहः* इति कृतः, नतु *वेदान्तार्थसंग्रहः* इति । परन्तु तत्तदुपनिषदां प्रधानवाक्यानां विचाराः *वेदार्थसंग्रहाख्ये* ग्रन्थे चर्चिताः । प्रधानवाक्यपर्यालोचनेनैव अन्येषामपि विवृतप्रायत्वाभिप्रायेण अन्ये परित्यक्ता स्युरित्यूह्यम् । श्रीभाष्यादिषु उपनिषद्वाक्यार्थविचारयितुः तत्तदुपनिषद्व्याख्यानासामर्थ्यं ऊहातीतम् । अतः अन्यवाक्यानां उपेक्षिततत्वमेव ऊह्यम् । अथवा श्रीभाष्यप्रभृतीनां ग्रन्थानां विवरणेन लब्धानां तत्तदुपनिषदां वाक्यसमूहस्य एकत्रकरणे तत्तदुपनिषद्भाष्यं लभ्यते इत्यपि सुवचम् । प्रकृते विशिष्टाद्वैतसिद्धान्तानुसारिषु व्याख्यानेषु अग्रपूजां लभते श्रीमद्रङ्गरामानुजमुनिप्रणीता *प्रकाशिका ।*

## उपनिषद्द्रष्टा

उपनिषदोऽस्याः कर्तुः अर्थात् द्रष्टुः विचारे पूर्वं किञ्चिदिव प्रस्तुतम् । तदत्र किञ्चि-द्विव्रियते ।

अस्य च विचारः अस्माकं त्रेधा उपलभ्यते । प्रथमस्तावत् ; स्कान्दपुराणे माहेश्वरखण्डे कौमारिकाख्ये उपखण्डे द्विचत्वारिंशत्तमेऽध्याये नारदार्जुनसंवादे अयं भागः प्रस्तुतः ।

हारीतमुनिवंशीयः माण्डूकिनामकः कश्चन ऋषिः । तत्पत्नी इतरा । तस्यां जातोऽयं महामनाः प्राग्जन्मन्यनुशिक्षितं वासुदेवद्वादशाक्षरमन्त्रमेव सदा जपन् मूक इवासीत् । तेनासन्तुष्टः माण्डूकिः पिङ्गानाम्नीं द्वितीयामूढ्वा चतुःपुत्रान् तस्यां लेभे । ते च वेदवेदान्तपारगाः यज्ञादिकर्मपराः पितरौ सन्तोषयामासुः । अनेन दुःखिता इतरा स्वपुत्रमुपगम्य सरोषदुःखम् अवदत् त्वादृशपुत्रप्राप्त्यपेक्षया वन्ध्यात्वमेव मम वरमासीत् । त्वन्तु अप्रयोजकः । एतेनावमानेन जीवनापेक्षया मम मरणमेव वरं मन्ये । दुर्भाग्याहं महीसागरसंगमेऽस्मिन् निमज्जेयम् इति । तदा त्यक्तमौनस्स मुनिः मुक्तिमार्गोपदेशं तस्या अकरोत् । एतेन सन्तुष्टा माता इतरा । ततः परं स्वप्ने वासुदेवरूपिणा भगवता चोदितः सः हरिमेधसो ब्राह्मणस्य यज्ञं गत्वा स्वजप्तवासुदेवमन्त्रमहिम्ना ऐतरेयब्राह्मणमन्त्रान् पठित्वा सर्वैः सुपूजितः लोकप्रसिद्धिं च प्राप । एवमितरापुत्रेण दृष्टत्वादिदं ऐतरेयसंज्ञकमभूत् ॥ इति ।

[1]आचार्यसायणोदितऋग्भाष्यपूर्वपीठिकायां अत्रैव कथायां किञ्चिदिव व्यत्यासो दृश्यते । स यथा -

याज्ञवल्क्यमहर्षेः पत्नी इतरा । कनीयजातीया यतोऽतः सा इतरेत्येवाहूताऽन्यैः । तस्याः पुत्रः यदा रोदिति बाल्ये तदा माता 'दुष्ट मा रोदीः' इत्यभाषत । ततः परं सः मूक इव आस्त । तं

---

1. श्रीजयचामराजेन्द्रवेदरत्नमाला - ऋग्वेद - संपुट - ३१ ऐतरेयब्राह्मण - प्रथम भाग - पुट.सं. ६-८

अप्रयोजकमेव अमन्यन्त अन्ये । याज्ञवल्क्यस्य अन्यभार्याजाः विद्वांसः वेदवेदांतपारदृश्वानः यज्ञयागादिकं कुर्वन्तः अहङ्कारविजृंभिताः बभूवुः ।

एकदा दूरदेशात् आगतेन ब्राह्मणेन साकं यज्ञार्थं गतानां तेषां वैभवादिकं अन्यैर्वर्णितं श्रुत्वा रुष्टा इतरा स्वपुत्रं निनिन्द । 'मूकस्त्वमप्रयोजकः । पश्य त्वत्सापत्नभ्रातृन् । किमर्थं त्वं न किमपि जल्पसे । मूक इव तूष्णीं तिष्ठसि । किमपि जल्प '। इत्यवदत् तदा सः इतरापुत्रः ऐतरेयः मातुर्वचः श्रुत्वा ; 'अम्ब, बाल्ये रोदनकाले मा रोदीः, तूष्णीमास्व । इति भवत्याः वचनमेव आज्ञात्वेन स्वीकृत्य मूक इवासमहम् । नाहं मूकः । परन्तु प्राग्जन्मसंस्कारवशात् वासुदेवद्वादशाक्षरं जपन्नासम् । अद्यैव गच्छामि तमध्वरम्' । इत्युक्त्वा तां यज्ञशालां अगमत् । तत्रागतं भ्रातरं अनुजाः सपत्नाः अपहासेन पश्यन्तः ; *किमर्थमत्रागतोऽयं मूर्खः । वदति वा कामपि यज्ञसम्बन्धिनीं ऋचं, करोति वा कामपि याज्ञिकीं क्रियाम्* इति जहसुः । तदगणय्य ऐतरेयः पितुरंके उपवेष्टुं प्रायतता अपतच्च भूमौ पित्रा उत्सारितोऽङ्कात् । तदा भूमिरेवोद्गम्य भूतलं भित्वा यज्ञमण्डपे, रत्नमणिमाणिक्यखचितं सिंहासनमानीय ; उपवेश्य च ऐतरेयं वासुदेवमन्त्रपूतं प्राह - *तव देवप्रसादात् भासन्तेऽनुपदिष्टा अपि वेदभागाः* इति । तदा भूम्यनुग्रहात् , जप्तवासुदेवमन्त्रानुग्रहाच्च तस्य यज्ञादिसम्बन्धिनः मन्त्रभागाः, तथा चत्वारिंशदध्यायपरिमिता ऐतरेयारण्यकमन्त्रभागाश्च प्रादुर्बभूवुः । एवं मह्या दत्तासनत्वात् महिदास इत्ययं प्रथामाप । इत्यादि कथा श्रूयते । विषयोऽयं व्याख्याकर्तुः नाम्ना सद्गुरुशिष्यस्य ऐतरेयब्राह्मणव्याख्याने सुखप्रदनाम्नि समुद्धृतः । मध्वाचार्यैः रचिते ऐतरेयोपनिषद्भाष्ये तु अन्यादृशी एव कथा न्यरूपि ।

ब्रह्मपुत्रः विशालः । तत्पत्नी इतरा । तस्याः तपसा तुष्टः भगवान् नारायणः पुत्रत्वेन प्रादुरभूत् । स चैकदा यागशालां प्रविष्टः । तत्तेजोपहतचक्षुषः यागशालागतसुरविप्रसंधाः विमूर्च्छिताः । ततः परं हरिं अस्तौत् चतुर्मुखः । ततश्च तेन हरिणा विबोधिताः ते गिरिशेन्द्रप्रभृतयः तस्यासन् दासाः । महतां देवानामपि दासत्वात् अयं महिदासः इति प्रथितः । ततः परं रमां अधिकृत्य ऐतरेयीमिमां ऋचं अब्रवीत् । तां चर्तुखात् अधीतवन्तो बह्वृचाः । इति ।

ऋग्भाष्यभूमिकायां कार्णाटिक्यां छांदोग्योपनिषदुक्तः ऐतरेयः महिदासापराभिधः, ऐतरेयारण्यकद्रष्टा च एक एव इत्यभिप्रयन्ति । परन्तु छान्दोग्योपनिषदः मध्वभाष्ये विषयमिममुद्धृत्य छान्दोग्योक्तः महिदासः अन्यः, ऐतरेय आरण्यकद्रष्टा अन्यः इत्यभ्यधायि ।

उपनिषदोऽस्याः सामस्त्येन शाङ्करभाष्यं नोपलभ्यते । द्वित्रा मातृका एव सन्तीति केचन वदन्ति । परन्तु प्रायः सर्वत्र आत्मषट्कस्यैव व्याख्यानं लभ्यते । किन्तु तत्रात्मषट्कस्य आदौ *तस्मात्* एष पन्था, एतत् कर्म, एतत्सत्यम् , यदेतत्परब्रह्मविज्ञानम् । इति । यद्यप्येतद्वाक्य व्याख्यानावसरे कर्ममार्गोऽपि पथिशब्दार्थत्वेनोक्तः, तथापि ज्ञानमार्गोपायत्वेन स उक्तः,न

प्राधान्येन इति भावः इति करणसंहतिरूपश्च प्राणः इत्यवोचाम प्राणसंवादादौ इति च वाक्यं लभ्यते । एतेन पूर्वभागे प्राणस्य उक्थत्वविचारावसरे उक्तमित्याद्यर्थः प्रतीयते । अनेन च पूर्वभागस्याऽपि व्याख्यानमासीदिति गम्यते । इममेवाधारीकृत्य षष्टिवर्षप्राक्तनीयां शिलाक्षर-मुद्रितां मातृकां श्रीकेवलानन्दसरस्वतिभिर्दत्तां उपजीव्य धर्मकोषाख्ये ग्रन्थे श्री लक्ष्मणशास्त्री जोषी महाभागाः मुद्रितवन्तः सन्ति । परन्तु इमामेकां मातृकां विहायान्या न काऽपि मातृकाद्यत्वे नोपलभ्यते । एवञ्च शांकरं भाष्यमपि अस्य विद्यते इति ज्ञायते । अन्या एका हस्तलिखितप्रतिः होळेनरसीपुरस्थ आध्यात्मप्रकाशकार्यालये विद्यते । परन्तु सा अमुद्रिता इति तदीय-[1]प्रस्तावनावचनतः ज्ञायते ।

## ऐतरेयोपनिषत्

बह्वृचः ऐतरेयारण्यके अस्त्यारण्यकपञ्चकम् । तत्र प्रथमारण्यके गवामयन-सत्रयागसम्बन्धिन्यः विचाराः प्रस्तुताः । विशेषतः महाव्रतसम्बंधिसूक्तादीनां विनियोगादिप्रकारः प्रपञ्चितः । द्वितीयारण्यके बृहतीसहस्रादीनां विचारः प्राप्तः । तृतीयारण्यके संहिताविषयकोपासनादिविचाराणां विवरणं दत्तमस्ति । चतुर्थारण्यके महानाम्नीव्रतस्य सम्बन्धिन्यः मन्त्राः, तथा तदीयविचाराश्च वर्तन्ते । पञ्चमे च आरण्यके पुनः महाव्रतीयविचारः विशेषतो विवृतः दृश्यते । तत्र प्रथमारण्यके सन्ति पञ्च अध्यायाः । द्वितीये आरण्यके सप्त सन्ति अध्यायाः । तृतीये अस्ति अध्यायद्वयम् । चतुर्थं चारण्यकं एकाध्यायात्मकम् । पञ्चमे पुनरस्ति अध्यायत्रिकम् । एवं पञ्चारण्यकात्मकेऽस्मिन् द्वितीयतृतीयौ आरण्यकौ प्रोच्येते ऐतरेयोपनिषन्नाम्ना । तत्र द्वितीयारण्यके सन्ति सप्त अध्यायाः इत्युक्तम् । तेष्वपि अध्यायेषु सन्ति अनेके खण्डाः । प्रथमे अष्टौ खण्डाः । द्वितीये चत्वारि । तृतीये अष्टौ । तुरीयं खण्डत्रयात्मकम् । पञ्चमषष्ठसप्तमाध्यायेषु एकैकखण्डाः संति । तृतीयं चारण्यकं प्रत्येकं षट्खण्डात्मकाध्यायद्वययुक्तम् । अत्र द्वितीये अन्तिमाध्यायत्रयं आत्मषट्कत्वेन प्रसिद्धम् ॥

## उपनिषत्सारम्

पूर्वमेवासूचि उपनिषदोऽस्य आत्मषट्कमिति नामेति । खण्डषट्कात्मकत्वात् , आत्मशब्देनारब्धत्वात् , आत्मविचारनिरूपणाच्च युक्तनामिकेयमुपनिषत् ।

प्रथमे तावत्खण्डे जगत्सृष्ट्यादिविचारः न्यरूपि । जगदादौ प्रलयकाले नासीदन्यज्जगत्स्रष्टारं विना । आसीदात्मा एक एव । तदुपरि ; (तेन साकमिति यावत् ) स्पर्धमानं नासीत् किमपि । सः आत्मा जगत्सर्जनसंकल्पं अकरोत् । तदर्थमादौ ससर्ज पञ्च महाभूतानां पृथिव्यप्तेजोवाय्वाकाशनाम्नां लोकानां पञ्चकम् । ततः परं लोकपालसृष्टये कृतसंकल्पः जलेन

---

1. ऐतरेयोपनिषत्तु - शांकरभाष्यस्यकर्णाटभाषानुवादः पृष्ठ.सं. ५, १९७५ प्रकाशनम् ।

पुरुषाकारं पिण्डमेकमकरोत्। आत्मसंकल्पवशात् आकारे तस्मिन् क्रमात् ; मुखं, वागिन्द्रियं, तदभिमानी अग्निः; घ्राणं, प्राणः, वायु ; नेत्रे चक्षुरिन्द्रियं, आदित्यः; कर्णौ, श्रोत्रेन्द्रियं, दिशः देवताः; चर्म, लोमानि, ओषधिवनस्पतयः ; हृदयं, मनः, चन्द्रमाः ; नाभिः, पायुः इन्द्रियं, मृत्युः ; तथा शिश्नं, रेतः, आपः इत्येवं लोकपालाः, तेषां स्थानं तथा इन्द्रियाणि च समुत्पन्नानि इति वर्णितम्।

ता देवताः लोकपालकाः संसारनिमग्नाः। प्रथमोत्पन्नस्य हिरण्यगर्भाख्यस्य विराट्-पुरुषस्य स्वसृष्टाशनायापिपासासंयोजनात् सृष्टा अग्न्यादयोऽपि लोकपालाः अशनायादियुक्ताः बभूवुः। तदा ते परमात्मानं अन्नादिभक्षणार्थं एकं अधिष्ठानं आवश्यकम्। तादृशं नः स्थानं प्रदर्शय। तत्र स्थित्वा अन्नं भोक्ष्यामहे। इत्यवोचन्। तदा प्रथमतः एकतोदन्तां गामानीय प्रदर्शितवान्। नेदमस्माकमुपभोगक्षममधिकरणम्। इत्यवोचन्। ततः परं उभयतोदन्तवन्तं हयमानीय प्रादर्शयत्। सोऽप्यश्वः केवलं भोगसाधनः। नानेन तत्त्वज्ञानादिप्राप्त्युपयोगादिकं किंचित् भवति। तस्मादयमप्यस्माकं नालं अधिकरणत्वेनाश्रयणाय। इत्यवोचन्। ततः परं एतादृशदेवतापेक्षितगुणयुक्तं मानुषमाकारं सृष्ट्वा प्रादर्शयत्। तेनानन्दिताः अंगीचक्रुरिदमस्त्वस्माकमधिकरणत्वेन। विविशुश्च तस्मिन् शरीरे भगवदनुमत्या यथास्थानम्। भगवतो वचनानुसारेण अशनायापिपासे च देवताभिस्साकमेव हविर्भागादिकं स्वीकुर्वन्तौ स्तः।

ततः परं स भगवान् *गोपहीना गावो यथा नश्येयुः, राजहीनाः प्रजाश्च यथा नङ्क्षन्ति तद्वत् एते लोकपाला नहि मद्विना जीवेयुरिति* आलोच्य ; तेषां नियमनाय शरीरमिदं प्रवेष्टुमकायत। परन्तु सर्वैरन्यैः लोकपालादिभिः प्रविष्टेन द्वारेण शरीरं प्रवेष्टुमकामयमानः शरीरपृष्ठभागादारभ्य शिरोमध्यपर्यन्तं स्थितया मूर्धन्यया सुषुम्नाख्यया नाड्या प्रविवेश। एवं परमात्मना विदार्य प्रविष्टत्वात् द्वारमिदं *विदृति* नाम्ना प्रसिद्धम्। अनेन द्वारेण उत्क्रान्तानां अर्चिरादिमार्गगतानां समेषां सुखदायकत्वाच्च *नान्दनम्* इदं द्वारम्। आनन्ददायीति नान्दनशब्दार्थः। एवं परमात्मना प्रविष्टस्यास्य त्रयः स्वप्नाः, अर्थात् जागरस्वप्नसुषुप्तयः ; त्रयः आवासस्थानरूपाश्च दक्षिणाक्षि-कण्ठअथवाऽन्तःकरणहृदयाकाशरूपाः भवन्ति। इति देहस्थस्य त्रयः अवस्थाः स्थानत्रयं च निर्दिष्टम्।

प्रवेशानन्तरं स जीवः सर्वत्रव्याप्तं भगवन्तं दृष्ट्वा *इदं दृष्टवान्* इत्यवदत्। तस्मादेव भगवान् इदन्द्रः इत्युच्यते। परन्तु देवानां अपरोक्ष नामापेक्षया परोक्षनाम्नि एव प्रीत्यतिशयवत्त्वात् सर्वे इदन्द्रनामानं भगवन्तं इन्द्रेति नाम्ना व्याहरन्तीति अस्मिन् खण्डे तृतीयके उपनिषदियं विवृण्वन् आत्मशब्दप्रवृत्तिनिमित्तं, भगवतो सर्वत्र व्याप्तत्वं च प्रदर्शयन् ; इन्द्रशब्दवाच्यत्वं च प्रकटयति। एवं खण्डत्रयेण आत्मनो जगतः सृष्टिप्रक्रममपि प्रकटितवतीयं उपनिषत्। एवं च आत्मषट्के आद्यत्रयं जगतः लोकलोकपालकान्नादीनां सृष्टेः तत्र भगवतो व्याप्तत्वस्य च प्रतिपादकमिति स्पष्टम् भवति।

ऐतरेयारण्यकस्य द्वितीयारण्यक पंचमाध्यायात्मके चतुर्थखण्डेऽस्मिन् जीवस्य अभिव्यक्तित्रयात्मकं जन्मत्रयं विव्रियते । एतेन गर्भवासादिविचारकथनेन वैराग्योत्पादनमेवाऽस्मिन्संसारार्णवे जीवस्य मुख्यं प्रयोजनम् । परन्तु विषयश्रवणेन धृतगर्भोपर्यपि विरागो मा जनीति गर्भिणीनां एतत्खण्डोपदेशकाले तत्र स्थाने न स्थातव्यमित्यादेशः कृतः उपनिषदा *अपक्रामन्तु गर्भिण्यः* इति । पुरुषस्य गर्भं माता आदौ बिभर्तीति लोकः सर्वोऽपि जानते । परन्तु श्रुतिर्वदति पुरुषे एव गर्भः प्रथमतो भवति इति । पुरुषस्य सर्वावयवगं तेजः एकत्र सम्भूय रेतोरूपतामाप्नोति । अयं रेत एव गर्भरूपतामग्रे आप्नोति यतोऽतः वर्तमानसामीप्यात् गर्भ इत्युच्यते । तस्य गर्भस्य रेतोरूपस्य धारणात् पुरुषे एव आदितः गर्भो भवतीति उपनिषदो वचनम् । एतादृशं रेतोरूपं गर्भं पुरुषः, ऋतुस्नातया पत्न्या संगतः तस्यां सिञ्चति । एवं सिक्तं, रेतः गर्भाकारेण परिणमते स्त्रियाम् । एवञ्च द्युपर्जन्यादिना आगत्य रेतोरूपेण पुरुषे स्थितस्य जीवस्य स्त्रियां गर्भाकारेण यः परिणामः स एव तस्य जीवस्य प्रथमं जन्म इति गीयते ।

एवं गर्भाकारेण परिणतं तमात्मानं पतिरेव स्वस्य पुत्ररूपेण गर्भं प्रविष्टः इति ज्ञात्वा ; स्वशरीरावयवस्य हिताय यथा सा कार्यं करोति, तदिष्टानिष्टप्राप्तिपरिहारादिना स्वशरीरं रक्षति ; तद्वदेव तं गर्भमपि सा स्त्री रक्षति । एवं गर्भरूपेण स्थितं स्वं संरक्षन्ती सा पत्यादिभिः बन्धुभिः यथोचितैरन्नपानादिभिः संरक्षणीया ; न तु केनापि कारणेन पीडनीया । तदेवं तां गर्भिणीं स्त्रियं संरक्षन् पतिः गर्भगतस्य स्वस्यैव रक्षणं अकरोदिव । एवं स्थितं गर्भं सा जनयति पुत्ररूपेण । गर्भाकारेण परिणतस्य तस्य जीवस्य पुत्ररूपेण जननमेव द्वितीयावस्था द्वितीयं जन्मेत्यर्थः । जातस्य तस्य उपनयनादि संस्कारं यत् पिता कारयति तदेव द्वितीयं जन्मेति केषाञ्चन व्याख्यानकाराणां आशयः । *जन्मना जायते शूद्रः संस्कारैः द्विज उच्यते* इति वाक्यमत्र प्रमाणमिव भाति । परन्तु एतत्प्रमाणं अनुसृत्य एवं वचने शूद्रादीनां संस्काराद्यभावात् जन्मद्वयमेव भवेत् ; न तु उपनिषदुक्तरीत्या जन्मत्रयम् । ततश्च जीवसामान्यस्य जन्मत्रयवचनं उपनिषदो विरुद्ध्येत । अतः संस्कारादीनां द्वितीयजन्मवचनापेक्षया मातृगर्भेण जननं एव द्वितीयजन्मेति वक्तुं युक्तमिति भासते ।

एवं मातृगर्भेण जातः पुत्रः पितुः प्रतिनिधिरिति सर्वैः अङ्गीकृतः । तस्मादेव पित्रा यदि यत्किंचित् कार्यं करणीयं अवशिष्टं तस्य पुत्रेण करणेऽपि तत्पित्रा कृतप्रायं मन्यन्ते जनाः । स्वपुत्रस्य प्रतिनिधित्वेन कृतकृत्यभावं प्राप्तः पिता जराद्यास्कन्दितः प्राप्तान्तिमायुः आप्नोति पञ्चत्वम् । पुनः प्रजायते लोकेऽस्मिन् स्वकर्मानुगुण्येन । इदमेव हि मरणानन्तरं पुनर्भवनं मनुष्यस्य तृतीयं जन्म इति गीयते । एवं संसारे पतितस्य पुनः जन्म, संसारः, मरणं, पुनः जन्मेति घटीयन्त्रवत् परिवर्तनं भवति । तस्मात् हेयमिमं संसारं परित्यक्तुं भगवदाराधनं अत्यन्तमावश्यकम् ।

सर्वमप्येतद्विचारं मातृगर्भस्थः वामदेवनामा ऋषिः विज्ञातवान् । ततः परं सः आराधनं भगवत ईहमानः लोहकवचसमानं संसारपञ्जरं निर्भिद्य पञ्जरोन्मुक्तखगवत् संसाराद्बहिर्गतः देहोत्क्रमणानन्तरं स्वर्गादिषु लोकेषु युक्तान् भोगान् भुक्त्वा अमृतः, अर्थात् जन्ममृत्युजराव्याधिभिः उन्मुक्तः अखिलहेयप्रत्यनीककल्याणगुणाधारस्य भगवतो कल्याणगुणा अनुभवन् मुक्तोऽभवदिति प्रतिपादितं अस्मिन् खण्डे ।

खण्डे च पञ्चमे आत्मतत्त्वस्वरूपविचारः प्रस्तुतः । यमुपास्य ऋषिर्वामदेवः अस्माच्छरीर-भेदादूर्ध्वमुत्क्रम्य अर्चिरादिना गत्वा स्वर्गादिभोगानुपभुज्य बभूव मुक्तः ; तादृशः शरीरेऽस्मिन् वसन् आत्मा कः । यतो हि शरीरेऽस्मिन् स्तौ द्वौ पुरुषौ । एकः वचनघ्राणनस्पर्शनादिकर्ता जीवः । अपरस्तु शरीरमिदं नाड्या मूर्धन्यया प्रविष्टः आत्मशब्दवाच्यः परमात्मा । शरीरेऽस्मिन् स्तौ द्वावपि इत्यत्र [1]*ऋतं पिबन्तौ सुकृतस्य लोके* [2]*द्वा सुपर्णा सयुजा सखाया* इत्यादीनि उपनिषद्वाक्यानि मानानि । एतयोर्द्वयोर्मध्ये कः उपासनीयः इत्यालोचनायां *एतत्संज्ञानमाज्ञानं* इत्यादिवाक्येन प्रकृष्टज्ञानवत्त्वात् अज्ञानादिदोषरहितत्वाच्च प्रज्ञशब्दवाच्यः यः परमात्मा स एव पुरुषशब्द-वाच्यः । स एवोपास्यः आत्मा ; तमेवोपास्य मुक्तो वामदेवः । तस्योपासनेनैव मुक्तिः इति च प्रतिपादितम् ।

अन्तिमे च षष्ठे खण्डे शान्तिपाठात्मके च *वाङ्मे* इत्यादिषु अधीतस्य वेदभागस्य चिरं स्थित्यै तथा गुरुशिष्ययोः संरक्षणार्थं च वेदपुरुषे भगवति प्रार्थनापुरस्सरं परिसमाप्तिः आत्मषट्कस्य कृता दृश्यते । एवं आत्मषट्केऽत्र जगत्सृष्ट्यात्मोपासनसंसारवैराग्यादिविचाराः प्रस्तुता ।

## प्रकृतप्रकाशनमधिकृत्य

संस्कृतसंशोधनसंसदेषा आषोडशवर्षेभ्यः उपनिषदां अद्यत्वे उपलभ्यमानानां श्रीवैष्णवसम्प्रदायानुसारिव्याख्यानानां प्रकटनाय कृतभूरियत्ना समुल्लसति इति विदितमेव हि समेषां विदुषाम् । अद्य यावत् तत्र तत्र प्रत्येकशः उपलभ्यमानानां व्याख्यानानां एकत्र संग्रहणे विविदिषां समेषां सह अधिजिगीषुणां विद्यार्थिनामपि सौकर्यं भवेदिति आलोच्य संसदः उपनिषन्निगमे विमर्शात्मकसम्पादनविभागः आरब्धः ; यस्यां दशोपनिषदां लब्धव्याख्यानानां विमर्शात्मक-सम्पादनपुरस्सरं अनितरसाधारण्या वाण्या गैर्वाण्या उपनिषदां मुद्रणं प्रवर्त्यते । अनेन च विभागेन व्याख्यानषट्कयुता ईशोपनिषत् , चतुर्व्याख्यासनाथा केनोपनिषत् च प्राकाश्यं नीते राजतः । अनेनैव क्रमेण प्रकृते ऐतरेयीमुपनिषदं वाचकानां करगां कर्तुं मोदामहे वयम् । प्रथमं हस्तगता एषा वाचनाध्ययनाध्यापनादिना मस्तकगता भगवदाराधनाय यदि उपयुज्यते सार्थस्तर्ह्यस्मदीयो यत्नः । उपनिषद्यस्यां सन्ति व्याख्यानानि पञ्च । प्रथमं तावत् भारद्वाजरामानुजाचार्यरचिता

1. कठोपनिषत् - ३-१ 2. मुण्डकोपनिषत् -३-१-१

प्रतिपदार्थदीपिका व्याख्यानम्। मन्त्रगतस्य प्रत्येकपदस्यापि अर्थं विवृणोति एषा। द्वितीया तावत् *प्रकाशिका* इति प्रथिता श्रीरङ्गरामानुजमुनिविरचिता। यथार्थनामवती चैषा। यतो हि प्रकाशयति उपनिषदो अर्थविशेषान्। तृतीया ख्याता आनन्दभाष्यनाम्ना भगवद्रामानन्दाचार्य प्रणीता। बालसंघं अपि स्पष्टं बोधयत् व्याख्यानं गोपालानन्दस्वामिरचितं *सुबोधिनी* इति प्रथितम्। अयं च गोपालानन्दः गुर्जरदेशीय; श्रीस्वामिनारायणार्याणां अन्तरङ्गशिष्येष्वन्यतमः मन्त्रशास्त्रप्रवीणः। सिद्धान्तदृष्ट्या एते श्रीमद्रामानुजानुयायिन इति ग्रन्थेनैव ज्ञायेत। अधिकं अवसरे विस्तरेण भवेत्। एतानि चत्वार्यपि व्याख्यानानि अत्र प्रकाशितानि। विशेषश्च विद्यतेऽस्मिन् ग्रन्थे यत्, अद्ययावत् अनुपलब्धं व्याख्यानमेकं प्राकाश्यं नीयते इति। तच्च प्रसिद्धानां महीषूरुसंस्थानस्य आस्थान- विदुषां विद्वन्मूर्धन्यानां *दर्शनोदय, हिन्दूदर्शनसार* प्रभृति ग्रन्थरत्ननिर्मातृणां श्रीमतां लक्ष्मीपुरं श्रीनिवासाचार्याणां नाम्ना *ऐतरेयोपनिषद् विवरणम्* इति प्रसिद्धम्। ग्रन्थरत्नमिदं अस्मदीयग्रन्थालयस्य हस्तप्रतिविभागे उपलब्धमिति निवेदयितुं मोदामहे वयम्। ग्रन्थेऽस्मिन् विशिष्टाः श्रीवैष्णवसम्प्रदायप्रतिपादकाः विषयाः सुस्पष्टं निरूपिताः। इदं च अनुबन्धे निवेशितम्। यथापूर्वं अनुबन्धे मन्त्रसूचनी प्रमाणानामकाराद्यनुक्रमणिका, संकेताक्षरसूचनी, ऐतरेय गतभगवन्नामावलिः, विशेषशब्दार्थाः, इतरग्रंथेषु ऐतरेयस्य विचाराः, भाष्यकाराणां चरितं, ग्रन्थसूचनीत्यादिकं सर्वं निबद्धमस्ति। अवश्यस्थलेषु युक्ताः टिप्पण्यः अधोनिर्दिष्टाः। एतादृशं ग्रन्थमिमं भवतां समर्पयितुं मोमुद्यतेऽस्मच्चेतः। यथापूर्वं हार्दं स्वीकुर्वन्ति भवन्तः इति विश्वसिमः।

इति

सज्जनाशीःपात्रीबुभूषुः

वादिराज . वि. अग्निहोत्री.

# विषयसूचनी

* * *

# ऐतरेयारण्यकम्

## [द्वितीयतृतीयारण्यके]

### द्वितीयारण्यके प्रथमोऽध्यायः

#### प्रथमः खण्डः

हरिः ओम् । एष पन्थाः, एतत् कर्म, एतद् ब्रह्म, एतत्सत्यम् । तस्मान्न प्रमाद्येत् । तन्नातीयात् । न ह्यत्यायन् पूर्वे । येऽत्यायंस्ते पराबभूवुः । तदुक्तमृषिणा ।

'प्रजा ह तिस्रोऽत्यायमीयुः न्यान्या अर्कमभितो विविश्रे ।
बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश' ॥ इति ।

' प्रजा ह तिस्रोत्यायमीयुः' इति । या वै ता इमाः प्रजास्तिस्रो अत्यायमायन् । तानीमानि वयांसि वंगावगधाश्चेरपादाः । 'न्यान्या अर्कमभितो विविश्र' इति । ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । 'बृहद्ध तस्थौ भुवनेष्वन्तः' इति । अद उ एव बृहत् भुवनेष्वन्तः असावादित्यः । 'पवमानो हरित आविवेश' इति । वायुरेव पवमानो दिशो हरित आविष्टः ॥ १ ॥

#### द्वितीयः खण्डः

उक्थमुक्थमिति वै प्रजा वदन्ति । तदिदमेवोक्थम् । इयमेव पृथिवी । इतो हीदं सर्वमुत्तिष्ठति, यदिदं किञ्च । तस्याग्निरर्कः ; अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । अन्तरिक्षमेवोक्थम् । अन्तरिक्षं वाऽनुपतन्ति । अन्तरिक्षमनु धावयन्ति । तस्य वायुरर्कः ; अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । असावेव द्यौरुक्थम् । अमुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति, यदिदं किञ्च । तस्यासावादित्योर्कः । अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । इत्यधिदैवतम् ।

अथाध्यात्मम् । पुरुष एवोक्थम् । अयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात् । तस्य मुखमेवोक्थम् यथा पृथिवी तथा । तस्य वागर्कः । अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । नासिके

पञ्चारण्यात्मकस्य ऐतरेयारण्यकस्य द्वितीयतृतीयारण्यके श्रीशङ्कराचार्यैः उपनिषत्त्वेन परिगणितो । परन्तु रङ्गरामानुजमुनिभिः द्वितीयारण्यके चतुर्थाध्यायादारभ्य सप्तमाध्यायपर्यन्तो भागः ब्रह्मप्रतिपादनपरः इतरभागास्तु अब्रह्मविद्याप्रतिपादनपराः इति न व्याख्याताः ।

एवोक्थम्, यथान्तरिक्षं तथा। तस्य प्राणोऽर्कः। अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते। तदेतत् ब्रध्नस्य विष्टपम्, यदेतत् नासिकायै विनतमिव। ललाटमेवोक्थम्, यथा द्यौः तथा। तस्य चक्षुरर्कः। अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते।

समानमशीतयोऽध्यात्मञ्चाधिदैवतञ्चान्नमेव। अन्नेन हीमानि भूतानि सर्वाणि समानन्तीं ३। अन्नेनेमं लोकं जयति। अन्नेनामुम्। तस्मात् समानमशीतयोऽध्यात्मञ्चाधिदैवतञ्चान्नमेव।

तदिदमन्नमन्नादम्। इयमेव पृथिवी। इतो हीदं सर्वमुत्तिष्ठति। यदिदं किञ्च। यद्ध किञ्चेदं प्रेर्ता ३ इ, तदसौ सर्वमत्ति। सेयमित्याद्याऽत्त्री। अत्ता ह वा आद्यो भाति। न तस्येशे, यन्नाद्यात् यद्धैनं नाद्युः॥

## तृतीयः खण्डः

अथातो रेतसः सृष्टिः। प्रजापते रेतो देवाः। देवानां रेतो वर्षम्। वर्षस्य रेत ओषधयः। ओषधीनां रेतोऽन्नम्। अन्नस्य रेतो रेतः। रेतसो रेतः प्रजाः। प्रजानां रेतो हृदयम्। हृदयस्य रेतो मनः। मनसो रेतो वाक्। वाचो रेतः कर्म। तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः। स इरामयः। यद्धीरामयस्तद्धिरण्मयः। हिरण्मयो ह वा अमुष्मिन् लोके सम्भवति। हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे, य एवं वेद॥

## चतुर्थः खण्डः

तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्। यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे। तस्मात् प्रपदे इत्याचक्षते। शफाः, खुरा इत्यन्येषां पशूनाम्। तदूर्ध्वमुदसर्पत्, ता ऊरू अभवताम्। उरु गृणीहीत्यब्रवीत्; तदुदरमभवत्। उर्वेव मे कुर्वित्यब्रवीत्; तदुरोऽभवत्। उदरं ब्रह्मेति शार्कराक्ष्या उपासते। हृदयं ब्रह्मेत्यारुणयः। ब्रह्मा हैव ता ३ इह। ऊर्ध्वं त्वेवोदसर्पत्; तच्छिरोऽश्रयत। यच्छिरोऽश्रयत, तच्छिरोऽभवत्। तच्छिरसः शिरस्त्वम्। ता एताः शीर्षञ्छ्रियः श्रिताः, चक्षुः श्रोत्रं मनो वाक्प्राणः। य एवमेतत् शिरसः शिरस्त्वं वेद।

ता अहिंसत, अहमुक्थमस्म्यहमुक्थमस्मि इति। ता अब्रुवन्, हन्तास्माच्छरीरादुत्क्रामाम। तद् यस्मिन् न उत्क्रान्ते इदं शरीरं पत्स्यति तदुक्थं भविष्यति इति। वागुदक्रामत्। अवदन् अश्नन् पिबन् आस्तैव। चक्षुरुदक्रामत्। अपश्यन् अश्नन् पिबन् आस्तैव। श्रोत्रमुदक्रामत्। अशृण्वन् अश्नन् पिबन् आस्तैव। मन उदक्रामत्। मीलित इवाश्नन् पिबन्नास्तैव। प्राण उदक्रामत्। तत्प्राण उत्क्रान्तेऽपद्यत तदशीर्यत आशारीतीं ३ तच्छरीरमभवत्। तच्छरीरस्य

शरीत्वम्। शीर्यते ह वा अस्य द्विषन् पाप्मा भ्रातृव्यः। परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥

ता अहिंसन्तैव, अहमुक्थमस्म्यहमुक्थमस्मि इति। ता अब्रुवन् , हन्तेदं पुनः शरीरं प्रविशाम। तद् यस्मिन् नः प्रपन्ने इदं शीररमुत्थास्यति, तदुक्थं भविष्यति इति। वाक् प्राविशत्। अशयदेव। चक्षुः प्राविशत् , अशयदेव। श्रेत्रं प्राविशत् , अशयदेव। मनः प्राविशत् , अशयदेव। प्राणः प्राविशत् , तत् प्राणे प्रपन्ने उदतिष्ठत्। तदुक्थमभवत् । तदेतदुक्थां ३ प्राण एव। प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवन् , त्वमुक्थमसि । त्वमिदं सर्वमसि । तव वयं स्मः । त्वमस्माकमसि इति। तदप्येतदृषिणोक्तम् त्वमस्माकं तव स्मसि इति ॥

## पञ्चमः खण्डः

तं देवाः प्राणयन्त। स प्रणीतः प्रातायत। प्रातायीतीं ३ तत् प्रातरभवत्। समागादितीं ३ तत् सायमभवत् । अहरेव प्राणो रात्रिरपानः । वागग्निश्चक्षुरसावादित्यः चन्द्रमा मनः दिशः श्रोत्रम्। स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत् तदुक्तं भवति। एतद्ध स्म वै तद्विद्वान् आह हिरण्यदन् वैदः, न तस्येशे यं मह्यं न दद्युरिति ; प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेद, एतद्ध तत् । तत् सत्यम् । सदिति प्राणः । तीत्यन्नम् । यमित्यसावादित्यः। तदेतत् त्रिवृत्। त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति। स यदि ह वा अपि मृषा वदति, सत्यं हैवास्योदितं भवति, य एवमेतत् सत्यस्य सत्यत्वं वेद ॥

## षष्ठः खण्डः

तस्य वाक् तन्तिः। नामानि दामानि। तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्। सर्वे हीदं नामनीं ३ सर्वं वाचाभिवदति। वहन्ति ह वा एनं तन्तिसम्बद्धाः य एवं वेद। तस्योष्णिग् लोमानि, त्वग् गायत्री। त्रिष्टुभ् मांसम् , अनुष्टुप् स्नावानि। अस्थि जगती, पङ्क्तिः मज्जा, प्राणो बृहती। स च्छन्दोभिश्छन्नः। तस्माच्छदांसीत्याचक्षते। छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणो यस्यां कस्याञ्चिद् दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद। तदुक्तमृषिणा अपश्यं गोपाम् इति। न ह्येष कदाचन संविशति। आ च परा पथिभिश्चरन्तम् इति। आ च ह्येष परा च पथिभिश्चरति। स सध्रीचीस्स विषूचीर्वसानः इति। सध्रीचीश्च ह्येष विषूचीश्च वस्ते इमा एव दिशः। आवरीवर्ति भुवनेष्वन्तः इति। एष ह्यन्तर्भुवनेष्वावरीवर्ति। अथो आवृतासोऽवतासो न कर्तृभिः इति। सर्वं हीदं प्राणेनावृतम्। सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धः। तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्धः एवं सर्वाणि भूतानि आपिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येव विद्यात् ॥

**सप्तमः खण्डः**

अथातो विभूतयोऽस्य पुरुषस्य । तस्य वाचा सृष्टौ पृथिवी चाग्निश्च । अस्यामोषधयो जायन्ते । अग्निरेनाः खादयति इदमाहरत इदमाहरतेति । एवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च । यावदनु पृथिवी यावदन्वग्निः, तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च, य एवमेतां वाचो विभूतिं वेद ।

प्राणेन सृष्टौ अन्तरिक्षं च वायुश्च । अन्तरिक्षं वाऽनु चरन्ति । अन्तरिक्षमनु शृण्वन्ति । वायुरस्मै पुण्यं गन्धमावहति । एवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षंच वायुश्च । यावदन्वन्तरिक्षं यावदनु वायुः । तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च ; य एवमेतां प्राणस्य विभूतिं वेद ॥

चक्षुषा सृष्टौ द्यौश्चादित्यश्च । द्यौर्हास्मै वृष्टिमन्नाद्यं सम्प्रयच्छति आदित्योस्य ज्योतिः प्रकाशं करोति । एवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च । यावदनु द्यौः यावदन्वादित्यः ; तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद ॥

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च । दिग्भ्यो हैनमायन्तीं३ । दिग्भ्यो विशृणोति । चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मणे । एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च । यावदनु दिशो यावदनु चन्द्रमाः, तावानस्य लोको भवति; नास्य तावल्लोको जीर्यते; यावदेतेषां न जीर्यते दिशाञ्च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद ॥

मनसा सृष्टा आपश्च वरुणश्च । आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे; वरुणोऽस्य प्रजां धर्मेण दाधार । एवमेते मनः पितरं परिचरन्ति आपश्च वरुणश्च । यावदन्वापो यावदनु वरुणः ; तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेषां न जीर्यतेऽपाञ्च वरुणस्य च, य एवमेतां मनसो विभूतिं वेद ॥

**अष्टमः खण्डः**

आपाः ३ इत्याप इति तदिदमाप एव । इदं वै मूलं अदस्तूलम् , अयं पिता, एते पुत्राः । यत्र ह क्व च पुत्रस्य, तत् पितुः । यत्र वा पितुः, तद्वा पुत्रस्येत्येतत् तदुक्तं भवति । एतद्ध स्म वै तद् विद्वानाह महिदासः ऐतरेयः, अहं मां देवेभ्यो वेद ; ओमद्देवान् वेद ; इतःप्रदाना ह्येते इतः सम्भूता इति ॥

स एष गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणः । तं ब्रह्मगिरिरित्याचक्षते । गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यम् । परास्य द्विषन् पाप्मा भ्रातृव्यो भवति । य एवं वेद ॥

स एषोऽसुः स एष प्राणः, स एष भूतिश्चाभूतिश्च । तं भूतिरिति देवा उपासांचक्रिरे । ते बभूवुः । तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति । अभूतिरित्यसुराः ; ते ह पराबभूवुः । भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति, य एवं वेद । स एष मृत्युश्चैवामृतञ्च । तदुक्तमृषिणा, आपाङ्प्राङेति स्वधया गृभीत इति । आपानेन ह्ययं यतः प्राणो न पराङ् भवति । अमर्त्यो मर्त्येनासयोनिः इति । एतेन हीदं सर्वं सयोनि । मर्त्यानि हीमानि शरीराणी ३, अमृतैषा - देवता । ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युः । न चिक्युरन्यम् इति । निचिन्वन्ति हैवेमानि शरीराणी ३ । अमृतैवेषा देवता । अमृतो ह वा अमुष्मिन् लोके सम्भवति ; अमृतः सर्वेभ्यो भूतेभ्यो ददृशे, य एवं वेद य एवं वेद ॥

## इति प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

### प्रथमः खण्डः

एष इमं लोकमभ्यार्चत् पुरुषरूपेण, य एष तपति । प्राणो वाव तदभ्यार्चत् ; प्राणो ह्येषः, य एष तपति । तं शतं वर्षाण्यभ्यार्चत् । तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । तं यत् शतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिनः । तस्माच्छतर्चिन इत्याचक्षते एतमेव सन्तम् । स इदं सर्वं मध्यतो दधे, यदिदं किञ्च । स यदिदं सर्वं मध्यतो दधे यदिदं किचं तस्मान्मध्यमाः । तस्मान्मध्यमा इत्याचक्षते एतमेव सन्तम् । प्राणो वै गृत्सोऽपानो मदः । स यत्प्राणो गृसोऽपानो मदः, तस्मात् गृत्समदः । तस्मात् गृत्समद इत्याचक्षते एतमेव सन्तम् । तस्येदं विश्वं मित्रमासीत् , यदिदं किञ्च । तद् यदस्येदं विश्वं मित्रमासीत् यदिदं किञ्च, तस्मात् विश्वामित्रः । तस्मात् विश्वामित्र इत्याचक्षते एतमेव सन्तम् । तं देवा अब्रुवन् , अयं वै नः सर्वेषां वाम इति । तं यद्देवा अब्रुवन् अयं वै नस्सर्वेषां वाम इति, तस्मात् वामदेवः । तस्मात् वामदेव इत्याचक्षते एतमेव सन्तम् । स इदं सर्वं पाप्मनोऽत्रायत, यदिदं किञ्च । स यदिदं सर्वं पाप्मनोत्रायत यदिदं किंच तस्मादत्रयः । तस्मादत्रय इत्याचक्षते एतमेव सन्तम् ॥

### द्वितीयः खण्डः

एष उ एव बिभ्रद् वाजः । प्रजा वै वाजः । तमेष बिभर्ति । यद् बिभर्ति तस्मात् भरद्वाजः । तस्माद् भरद्वाज इत्याचक्षते एतमेव सन्तम् । तं देवा अब्रुवन् अयं वै नः सर्वेषां वसिष्ठ इति । तं यद् देवा अब्रुवन् अयं वै नः सर्वेषां वसिष्ठ इति, तस्मात् वसिष्ठः । तस्माद् वसिष्ठ इत्याचक्षते एतमेव सन्तम् । स इदं सर्वमभिप्रागात् , यदिदं किञ्च । स यदिदं सर्वमभिप्रागात् यदिदं किञ्च, तस्मात्

प्रगाथाः। तस्मात् प्रगाथा इत्याचक्षते एतमेव सन्तम्। स इदं सर्वमभ्यपवयत, यदिदं किंच। स यदिदं किञ्च सर्वमभ्यपवयत तस्मात् पावमान्यः । तस्मात् पावमान्य इत्याचक्षत एतमेव सन्तम् । सोऽब्रवीत् अहमिदं सर्वमसानि, यच्च क्षुद्रम् , यच्च महदिति । ते क्षुद्रसूक्ताश्चाभवन् , महासूक्ताश्च । तस्मात् क्षुद्रसूक्ताः । तस्मात् क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तम्। सूक्तं बतावोचतेति । तत् सूक्तमभवत्। तस्मात् सूक्तम्। तस्मात् सूक्तमित्याचक्षत एतमेव सन्तम्। एष वा ऋक्। एष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत। स यदेभ्यो सर्वेभ्यो भूतेभ्योऽर्चत् तस्मादृक् । तस्मात् ऋगित्याचक्षत एतमेव सन्तम् । एष वा अर्धर्चः एष ह्येभ्य सर्वेभ्योर्धेभ्योर्चत । स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत तस्मादर्धर्चः। तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम्। एष वै पदम्। एष हीमानि सर्वाणि भूतानि पादि । स यदिमानि सर्वाणि भूतानि पादि तस्मात् पदम् । तस्मात् पदमित्याचक्षत एतमेव सन्तम् । एष वा अक्षरम् । एष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति ; न चैनमतिक्षरन्ति । स यदेभ्यो सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति, तस्मादक्षरम् । तस्मादक्षरमित्याचक्षत एतमेव सन्तम्। ता वा एता ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव। प्राण ऋच इत्येव विद्यात्॥

### तृतीयः खण्डः

विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपानिषसाद। स ह अन्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस। तेनेन्द्रस्य प्रियं धामोपेयाय। तमिन्द्र उवाच, ऋषे प्रियं वै मे धामोपागाः स वा ऋषे द्वितीयं शंसेति। स ह, अन्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस। तेनेन्द्रस्य प्रियं धामोपेयाय। तमिन्द्र उवाच , ऋषे प्रियं वै मे धामोपागा; स वा ऋषे तृतीयं शंसेति । स ह, अन्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस। तेनेन्द्रस्य प्रियं धामोपेयाय। तमिन्द्र उवाच, ऋषे प्रियं वै मे धामोपागाः ; वरं ते ददामीति। स होवाच 'त्वामेव जानीयामिति। तमिन्द्र उवाच, प्राणो वा अहमस्मि ऋषे, प्राणस्त्वं, प्राणः सर्वा भूतानि। प्राणो ह्येष य एष तपति। स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि। तस्य मेऽन्नं मित्रं दक्षिणम्। तद्वैश्वामित्रम्। एष तपन्नेवाऽस्मीति होवाच॥

### चतुर्थः खण्डः

तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य यानि व्यञ्जनानि तच्छरीरम् । यो घोषः स आत्मा। य ऊष्माणः स प्राणः। एतद्धस्म वै तद् विद्वान् वसिष्ठो बभूव। तत एतं नामधेयं लेभे। एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच । एतदु हैवेन्द्रो भरद्वाजाय प्रोवाच। तस्मात् स तेन बन्धुना यज्ञेषु हूयते। तद्वा इदं बृहतीसहस्रं सम्पन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशंतम-

क्षराणां सहस्राणि भवन्ति । तावन्ति शतसंवत्सरस्याह्नां भवन्ति । व्यञ्जनैरेव रात्रीराप्नुवन्ति ; स्वरैरहानि । तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेद । तद् योऽहं सोसौ ; योऽसौ सोऽहम् । तदुक्तमृषिणा, सूर्य आत्मा जगतस्तस्थुषश्च इत्येतदुहैवोपेक्षेतोपेक्षेत ॥

इति द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

### प्रथमः खण्डः

यो ह वा आत्मानं पञ्चविधमुक्थं वेद, यस्मादिदं सर्वमुत्तिष्ठति, स सम्प्रतिवित् पृथिवी वायुराकाश आपो ज्योतींषीति । एष वा आत्मोक्थं पञ्चविधम् , एतस्माद्धीदं सर्वमुत्तिष्ठति । एतमेवाप्येति । अयनं ह वै समानानां भवति य एवं वेद ।

तस्मिन् योऽन्नञ्चान्नादञ्च वेद, अहास्मिन्नन्नादो जायते । भवत्यस्यान्नम् । आपश्च पृथिवीचान्नम् । एतन्मयानि ह्यन्नानि भवन्ति । ज्योतिश्च वायुश्चान्नादम् । एताभ्यां हीदं सर्वमन्नमत्ति । आवपनमाकाशः । आकाशे हीदं सर्वं समोप्यते । आवपनं ह वै समानानां भवति य एवं वेद । तस्मिन् योऽन्नंचान्नादं च वेद, अहास्मिन्ननादो जायते । भवत्यस्यान्नम् । ओषधिवनस्पतयोऽन्नम् । प्राणभृतोन्नादम् । ओषधिवनस्पतीन् हि प्राणभृतोऽदन्ति ।

तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहिताः तेन्नादाः । अन्नमितरे पशवः । तस्मात्त इतरान् पशूनधीव चरन्ति । अधीव ह्यन्नेऽन्नादो भवति । अधीव ह समानानां जायते य एवं वेद ॥

### द्वितीयः खण्डः

तस्य य आत्मानमाविस्तरां वेद, अश्नुते हाविर्भूयः । ओषधिवनस्पतयो यच्च किञ्च प्राणभृत् आत्मानमाविस्तरां वेद । ओषधिवनस्पतिषु हि रसो दृश्यते । चित्तं प्राणभृत्सु । प्राणभृत्सु त्वेवाविस्तरामात्मा । तेषु हि रसोऽपि दृश्यते ; न चित्तमितरेषु । पुरुषे त्वेवाऽऽविस्तरामात्मा । स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति, विज्ञातं पश्यति वेद श्वस्तनं, वेद लोकालोकौ, मर्त्येनामृत-मीप्सत्येवं सम्पन्नः । अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम् । न विज्ञातं वदन्ति, न विज्ञातं पश्यन्ति, न विदुः श्वस्तनम् , न लोकालोकौ ! त एतावन्तो भवन्ति । यथाप्रज्ञं हि सम्भवाः ॥

### तृतीयः खण्डः

स एष पुरुषः समुद्रः सर्वं लोकमति यध्द किञ्चाश्नुते, अत्येनं मन्यते । यद्यन्तरिक्षलोकमश्नुते अत्येनं मन्यते । यद्यमुं लोकमश्नुवीत, अत्येवैनं मन्येत ॥

स एष पुरुषः पञ्चविधः । तस्य यदुष्णं तज्ज्योतिः । यानि खानि स आकाशः । अथ यल्लोहितं श्लेष्मा रेतः ता आपः । यच्छरीरं सा पृथिवी । यः प्राणः स वायुः ॥

स एष वायुः पञ्चविधः । प्राणोऽपानो व्यान उदानस्समानः । ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति । प्राणस्य ह्यन्वपायमेता अपियन्ति । स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः । स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुःसोमः । स एष यज्ञानां सम्पन्नतमो यत्सोमः । एतस्मिन् ह्येताः पञ्च विधा अधिगम्यन्ते । यत् प्राक् सवनेभ्यः सैका विधा ; त्रीणि सवनानि ; यदूर्ध्वम् , सा पञ्चमी ॥

## चतुर्थः खण्डः

यो ह वै यज्ञे यज्ञं वेद ; अहन्यहः, देवेषु देवमध्यूहूलम् । स सम्प्रतिवित् । एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवमध्यूहूलो यदेतन्महदुक्थम् । तदेतत्पंचविधं त्रिवृत् पंचदशं सप्तदशमेकविंशं पंचविंशमिति स्तोमतः, गायत्रं रथन्तरं बृहद् भद्रं राजानमिति सामतः । गायत्र्युष्णिक् बृहती त्रिष्टुप् द्विपदेति च्छन्दतः, शिरो दक्षिणः पक्षः उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् । पञ्चकृत्वः प्रस्तौति, पञ्चकृत्व उद्गायति, पञ्चकृत्वः प्रतिहरति, पञ्चकृत्व उपद्रवति, पञ्चकृत्वो निधनमुपयन्ति । तत् स्तोभसहस्रं भवति ।

एवं ह्येताः पञ्च विधा अनुशस्यन्ते । यत् प्राक् तृचाशीतिभ्यः सैका विधा । तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी । तदेतत् सहस्रं तत् सर्वं तानि दशदशेति वै सर्वम् । एतावती हि संख्या दशदशतः तच्छतं दशशतानि तत्सहस्रं तत्सर्वं तानि त्रीणिच्छंदांसि भवन्ति । त्रेधाविहितं वा इदमन्नमशनं पानं खादः तदेतैराप्नोति ॥

## पञ्चमः खण्डः

तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तद्धैतदेके नानाछन्दसां सहस्रं प्रतिजानते किमन्यत् सदन्यत् ब्रूयामेति । त्रिष्टुप् सहस्रमेके जगती सहस्रमेकेऽनुष्टुप् सहस्रमेके । तदुक्तमृषिणा अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषा इति । वाचि वै तदैन्द्रं प्राणं न्यचायन् इत्येतत् तदुक्तं भवति । स हेश्वरो यशस्वी कल्यणकीर्तिर्भवितोः । ईश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह अकृत्स्नो ह्येष आत्मा यद्वागभि हि प्राणेन मनसेऽस्यमानो वाचा नानुभवति । बृहतीमभिसम्पादयेत् । एष वै कृत्स्न आत्मा यद् बृहती । सोऽयमात्मा सर्वतः शरीरैः परिवृतः । एवमेव बृहती सर्वतश्छन्दोभिः परिवृता । मध्यं ह्येषामङ्गानामात्मा, मध्यं छन्दसां बृहती । स हेश्वरो यशस्वी

कल्याणकीर्तिर्भवितोः ईश्वरो ह तु पुरायुषः प्रैतोः इति ह स्माह कृत्स्नो ह्येष आत्मा यद् बृहती। तस्मात् बृहतीमेवाभिसम्पादयेत् ॥

### षष्ठः खण्डः

तद्वा इदं बृहतीसहस्रं सम्पन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभः। आतं वै भूयसा कनीयः। तदुक्तमृषिणा; वाचमष्टापदीमहमिति अष्टौ हि चतुरक्षराणि भवन्ति। नवस्रक्तिमिति बृहती सम्पद्यमाना नवस्रक्ति। ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टा। इन्द्रात् परि तन्वं ममे इति। तद् यदेवैतद् बृहतीसहस्रमनुष्टुप्सम्पन्नं भवति। तस्मात्तदैन्द्रात् प्राणात् बृहत्यै वाचमनुष्टुभं तन्वं सन्निर्मिमीते। स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्। तदेतत् पञ्चविधं मितममितं स्वरः सत्यानृते इति। ऋग्गाथा कुम्ब्या तन्मितम्। यजुर्निगदो वृथा वाक्तदमितम्। सामाथो यः कश्च गेष्णः सः स्वरः। ओमिति सत्यम्। नेत्यनृतम्। तदेतत् पुष्पं फलं वाचो यत्सत्यम्। स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः पुष्पं हि फलं वाचः सत्यं वदति। अथैतन्मूलं वाचो यदनृतम्। तद्यथा वृक्ष आविर्मूलः शुष्यति; स उद्वर्तते। तस्मादनृतं न वदेत्। दयेत त्वेनेन। पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति। तद्यत् किञ्चोमित्याह, अत्रैवास्मै तद्रिच्यते। स यत्सर्वमोंकुर्यात्, रिञ्च्यादात्मानम्। स कामेभ्यो नालं स्यात्। अथैतत् पूर्णमभ्यात्मं यन्नेति। स यत्सर्वं नेति ब्रूयात्पापिकास्य कीर्तिर्जायेत। सैनं तत्रैव हन्यात्। तस्मात् काल एव दद्यात्, काले न दद्यात्। तत् सत्यानृते मिथुनीकरोति। तयोर्मिथुनात् प्रजायते। भूयान् भवति। यो वै तां वाचं वेद। यस्या एष विकारः, स सम्प्रतिवित्। अकारो वै सर्वा वाक्। सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति। तस्यै यदुपांशु स प्राणः। अथ यदुच्चैस्तच्छरीरम्। तस्मात् तत् तिर इव तिर इव ह्यशरीरम्। अशरीरो हि प्राणः। अथ यदुच्चैस्तच्छरीरम्। तस्मात्तदाविः। आविर्हि शरीरम् ॥

### सप्तमः खण्डः

तद्वा इदं बृहतीसहस्रं सम्पन्नम्। तद् यशः। स इन्द्रः। स भूतानामधिपतिः। स य एवमेतमिन्द्रं भूतानामधिपतिं वेद, विस्रसा हैवास्माल्लोकात् प्रैति इति ह स्माह महिदास ऐतरेयः। प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति। तदाहुर्यदनेन रूपेणामुं लोकमभिसम्भवतीं३, अथ केन रूपेणेमं लोकमाभवतीं ३। तद्यदेतत् स्त्रियां लोहितं भवति, अग्नेस्तद्रूपम्। तस्मात् तस्मान्न बीभत्सेत। अथ यदेतत् पुरुषे रेतो भवति, आदित्यस्य तद्रूपम्। तस्मात् तस्मान्न बीभत्सेत। सोऽयमात्मेममात्मानममुष्मा आत्मने सम्प्रयच्छति। तावन्योन्यमभिसम्भवतः। अनेनाह रूपेणामुं लोकमभिसम्भवति। अमुनो रूपेणेमं लोकमाभवति ॥

### अष्टमः खण्डः

तत्रैते श्लोकाः ।

यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥
यदक्षरादक्षरमेति युक्तं युजोयुक्ता अभि यत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥
यद्वाचा ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।
तद्विद्यूया कवयोन्वविन्दन् नामायत्ता समतृप्यञ्छ्रुतेऽधि ॥
यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् ॥
नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्रीपुमान् ब्रुवन् ।
पुमांसं न ब्रुवन्नेनं वदन् वदति कश्चन ॥

अ इति ब्रह्म तत्रागतमहमिति ॥ तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहती सहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति । जीवाक्षरेणैव जीवाहराप्नोति ; जीवाह्ना जीवाक्षरमिति ।

अनकाममारोऽथ देवरथः । तस्य वागुद्धिः । श्रोत्रे पक्षसी । चक्षुषी युक्ते । मनः संग्रहीता । तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा - आतेन यातं मनसो जवीयसा निमिषश्चिज्जवीयसेति जवीयसेति ॥

### इति तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

### प्रथमः खण्डः

### आत्मषट्कम्*

आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत ॥

अम्भो मरीचीर्मरमापः । अदोम्भः परेण दिवम् , द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः, या अधस्तात् ता आपः ॥

* चतुर्थाध्यायः खण्डत्रयात्मकः । पञ्चमषष्ठसप्तमाध्यायास्तु एकैकखण्डात्मकाः । आहत्यैतद्भागस्य षट्खण्डात्मकत्वात् 'आत्मषट्कम्' इति निर्देशः ।

स ईक्षत, इमे नु लोकाः ; लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् ॥

तमभ्यतपत् , तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम् । मुखात् वाक् ; वाचोऽग्निः । नासिके निरभिद्येताम् । नासिकाभ्यां प्राणः ; प्राणाद्वायुः । अक्षिणी निरभिद्येताम् । अक्षीभ्यां चक्षुः ; चक्षुष आदित्यः । कर्णौ निरभिद्येताम् । कर्णाभ्यां श्रोत्रम् ; श्रोत्रात् दिशः । त्वङ् निरभिद्यत । त्वचो लोमानि लोमभ्य ओषधिवनस्पतयः । हृदयं निरभिद्यत । हृदयान्मनः ; मनसश्चन्द्रमाः । नाभिर्निरभिद्यत । नाभ्या अपानः ; अपानान्मृत्युः । शिश्नं निरभिद्यत । शिश्नाद्रेतः ; रेतस आपः ॥

### द्वितीयः खण्डः

ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतन् तमशनायापिपासाभ्यामन्ववार्जत् । ता एनमब्रुवन् ; आयतनं नः प्रजानीहि । अस्मिन् प्रतिष्ठिता अन्नमदामेति ॥

ताभ्यो गामानयत् । ता अब्रुवन् , न वै नोऽयमलमिति ॥

ताभ्यः पुरुषमानयत् । ता अब्रुवन् , न वै नोऽयमलमिति ॥

ताभ्यः पुरुषमानयत् । ता अब्रुवन् , सुकृतं बतेति । पुरुषो वाव सुकृतम् । ता अब्रवीत् , यथायतनं प्रविशतेति ॥

अग्निर्वाग्भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत् । आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत् । दिशश्श्रोत्रं भूत्वा कर्णौ प्राविशन् । ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन् । चन्द्रमा मनो भूत्वा हृदयं प्राविशत् । मृत्युरपानो भूत्वा नाभिं प्राविशत् । अपो रेतो भूत्वा शिश्नं प्राविशत् ॥

तमशनायापिपासे अब्रूताम् । आवाभ्यां अधिप्रजानीहि इति । स ते अब्रवीत् , एतास्वेव वां देवतास्वाभजामि , एतासु भागिन्यौ करोमि इति । तस्मात् यस्यै कस्यै च देवतायै हविर्गृह्यते, भागिन्यावेवास्यामशनायापिपासे भवतः ॥

### तृतीयः खण्डः

स ईक्षतेमे नु लोकाश्च, लोकपालाश्च ; अन्नमेभ्यः सृजा इति । सोपोभ्यतपत् । ताभ्योभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायत ; अन्नं वै तत् ॥

तदेतदभिसृष्टं सत्पराङ्त्यजिघांसत् । तद्वाचाजिघृक्षत् । तन्नाशक्नोद्वाचा ग्रहीतुम् । स यद्धैनद्वाचाग्रहैष्यत् , अभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥

तत् प्राणेनाजिघृक्षत् । तन्नाशक्नोत् प्राणेन ग्रहीतुम् । स यद्धैनत् प्राणेनाजिघृक्षत् , अभिप्राण्य हैवान्नमत्रप्स्यत् ॥

तच्चक्षुषाऽजिघृक्षत् । तन्नाशक्नोत् चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षुषाऽग्रहैष्यत् , दृष्ट्वा हैवान्नमत्रप्स्यत् ॥

तच्छ्रोत्रेणाजिघृक्षत् । तन्नाशक्नोत् श्रोत्रेण ग्रहीतुम् । स यद्धैनच्छ्रोत्रेणाग्रहैष्यत् , श्रुत्वा हैवान्नमत्रप्स्यत् ॥

तत्त्वचाजिघृक्षत् । तन्नाशक्नोत्त्वचा ग्रहीतुम् । स यद्धैनत्त्वचाऽग्रहैष्यत् , स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥

तन्मनसाऽजिघृक्षत् । तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मनसाऽग्रहैष्यत् , ध्यात्वा हैवान्नमत्रप्स्यत् ॥

तच्छिश्नेनाजिघृक्षत् । तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यत् , विसृज्य हैवान्नमत्रप्स्यत् ॥

तदपानेनाजिघृक्षत् । तदावयत् । स एषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ॥

स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत - यदि वाचाभिव्याहृतं, यदि प्राणेनाभिप्राणितम् , यदि चक्षुषा दृष्टम् , यदि श्रोत्रेण श्रुतम् , यदि त्वचा स्पृष्टम् , यदि मनसा ध्यातम् , यद्यपानेनाभ्यपानितम् , यदि शिश्नेन विसृष्टम् , अथ कोऽहमिति ॥

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वाः । तदेतन्नान्दनम् । तस्य त्रय आवसथाः, त्रयः स्वप्नाः अयमावसथोऽयमावसथोऽयमावसथ इति ॥

स जातो भूतान्यभिव्यैख्यत् । किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीं ३ । तस्मादिदन्द्रो नाम । इदन्द्रो ह वै नाम । तमिदन्द्रँ सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥

**इति चतुर्थोऽध्यायः**

## अथ पञ्चमोऽध्यायः

### प्रथमः खण्डः

[अपक्रामन्तु गर्भिण्यः]

पुरुषे ह वा अयमादितो गर्भो भवति, यदेतद्रेतः । तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति । तद्यदा स्त्रियां सिञ्चति, अथैतज्जनयति । तदस्य प्रथमं जन्म ॥

तत् स्त्रिया आत्मभूयं गच्छति, यथा स्वमङ्गम् , तथा । तस्मादेनां न हिनस्ति । साऽस्यैतमात्मानं अत्र गतं भावयति ॥

सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोऽग्रे अधिभावयति । स यत्कुमारं जन्मनोऽग्रेऽधिभावयति, आत्मानमेव तद्भावयति । एषां लोकानां सन्तत्यै । एवं सन्तता हीमे लोकाः । तदस्य द्वितीयं जन्म ॥

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यः । वयोगतः प्रैति । स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म । तदुक्तमृषिणा —

'गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्' ॥ इति ।

गर्भ एवैतच्छयानो वामदेव एवमुवाच । स एवं विद्वान् अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवत् समभवत् ॥

[यथास्थानं गर्भिण्यः]

**इति पञ्चमोऽध्यायः**

## अथ षष्ठोऽध्यायः

कोऽयमात्मेति वयमुपास्महे, कतरः स आत्मा ॥

येन वा स्वप्नं पश्यति, येन वा शब्दं शृणोति, येन वा गन्धानाजिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति, यदेतद्धृदयं मनश्च एतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिः धृतिर्मतिः मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति । सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥

एष ब्रह्मा एष इन्द्र एष प्रजापतिः एते सर्वे देवाः । इमानि च पञ्च महाभूतानि पृथिवी वायुराकाशः आपो ज्योतींषीति, एतानि, इमानि च क्षुद्रमिश्राणीव, बीजानि, इतराणि चेतराणि च, अण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि च, अश्वा गावः पुरुषा हस्तिनो यत् किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञानेत्रम् । प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म । स एतेनैव प्रज्ञेनात्मनास्मल्लोकादुत्क्रम्य अमुष्मिन् लोके सर्वान् कामान् आप्त्वामृतः समभवत् समभवदिति । इत्युपनिषत् ॥

**इति षष्ठोऽध्यायः**

## अथ सप्तमोऽध्यायः

वाङ् मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणी स्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान् सन्दधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । अवतु वक्तारम् । ओं शान्तिः शान्तिः शान्तिः ॥

## इति सप्तमोऽध्यायः

## इत्यात्मषट्कम्

## इति द्वितीयमारण्यकम्

# तृतीयमारण्यकम्

## अथ प्रथमोऽध्यायः

### प्रथमः खण्डः

अथातः संहिताया उपनिषत् । पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेयः । आकाशः संहितेत्यस्य माक्षव्यो वेदयात्र्-चक्रे । स हाविपरिवृतो मेने, न मेऽस्य पुत्रेण समगादिति । समाने वै तत्परिहृतो मन इत्यागस्त्यः । समानं ह्येतद् भवति वायुश्चाकाशश्च । इत्यधिदैवतम् । अथाध्यात्मम् । वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः । अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपम् । मनसा वा अग्रे संकल्पयति । अथ वाचा व्याहरति । तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति । समानमेनयोरत्र पितुश्च पुत्रस्य च । स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । इति नु माण्डूकेयानाम् ॥

### द्वितीयः खण्डः

अथ शाकल्यस्य । पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः सन्धिः पर्जन्यः सन्धाता । तदुतापि यत्रैतद्बलवदनूद्गृह्वन्त्सन्दधदहोरात्रे वर्षति, द्यावापृथिव्यौ समधातामित्युताप्याहुः इतीन्वधिदैवतम् । अथाध्यात्मम् । पुरुषो ह वा अयं सर्व आन्दम् , द्वे विदले भवत् इत्याहुः । तस्येदमेव पृथिव्या रूपम् , इदं दिवः, तत्रायमन्तरेणाकाशो यथासौ द्यावापृथिव्यावन्तरेणाकाशः । तस्मिन्नस्मिन्नाकाशे प्राण आयत्तो यथा अमुष्मिन्नाकाशे वायुरायत्तः । यथामूनि त्रीणि ज्योतींषि, एवमिमानि पुरुषे त्रीणि ज्योतींषि । यथाऽसौ दिव्यादित्यः, एवमिदं शिरसि चक्षुः, यथासावन्तरिक्षे विद्युत् एवमिदमात्मनि हृदयम् । यथाऽयमग्निः पृथिव्याम् , एवमिदमुपस्थे रेतः । एवमु ह स्म

सर्वलोकमात्मानमनुविधायाह इदमेव पृथिव्या रूपम्, इदं दिवः। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसाब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥

## तृतीयः खण्डः

अथातो निर्भुजप्रवादाः । पृथिव्यायतनं निर्भुजम् । दिव्यायतनं प्रतृणम् । अन्तरिक्षायतनमुभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेत् अच्योष्टावराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । अथ यद्येनं प्रतृणं ब्रुवन्तमुपवदेत् , अच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयात् , यस्त्वेवोभयमन्तरेणाह तस्य नास्त्यपवादः । यद्धि सन्धिं विवर्तयति, तन्निर्भुजस्य रूपम् । अथ यच्छुद्धे अक्षरे व्याहरति, तत् प्रतृणस्याग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवति । अन्नाद्यकामो निर्भुजं ब्रूयात् , स्वर्गकामः प्रतृणम् , उभयकाम उभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत् , पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनं प्रतृणं ब्रुवन्तं पर उपवदेत् , दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेत् अन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात् । यथा तु कथा च ब्रुवन्वाऽब्रुवन्तं वा ब्रूयात् , अभ्याशमेव यत् तथा स्यात् न त्वेवान्यत् कुशलात् ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने च न ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ॥

## चतुर्थः खण्डः

अथातोऽनुव्यवहाराः । प्राणो वंश इति विद्यात् । स य एनं प्राणं वंशमुपवदेच्छक्नुवन् चेन्मन्येत प्राणं वंशं समधां ३ प्राणं मा वंशं सन्दधतं न शक्नोषीत्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । अथ चेदशक्नुवन्त मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः सन्धातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । यथा तु कथा च ब्रुवन्वाऽब्रुवन्तं वा ब्रूयात् अभ्याशमेव यत् तथा स्यात् । न त्वेवान्यत्कुशलाद् ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने न च ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ॥

## पञ्चमः खण्डः

अथ खल्वाहुर्निर्भुजवक्त्राः । पूर्वमक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति । स य एवमेतां संहितां वेद, संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः,

पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपम्। योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विवर्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां विभजते सा संहितेति। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति। अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रः, अक्षरे खल्विमे आविकर्षन् अनेकीकुर्वन् यथावर्णमाह ; तद्यासौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञपनी, साम तद्भवति ; सामैवाहं संहितां मन्य इति। तदप्येतत् ऋषिणोक्तं - बृहस्पते म परः साम्नो विदुरिति। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥

## षष्ठः खण्डः

बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति तारुक्ष्यः। वाग्वै रथन्तरस्य रूपम्। प्राणो - बृहत्। उभाभ्यामु खलु संहिता सन्धीयते वाचा च प्राणेन च। एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तारुक्ष्यः।एतस्यां ह स्म मात्रायां गा रक्षयते तारुक्ष्यः।तदप्येतदृषिणोक्तम्।रथन्तरमाजभारा वसिष्ठो भरद्वाजो बृहदाचक्रे अग्नेरिति। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति। वाक् प्राणेन संहितेति कौण्ठरव्यः। प्राणः पवमानेन पवमानो विश्वैर्देवैः विश्वेदेवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषावरपरा संहिता। स यो हैतामवरपरां संहितां वेद, एवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते यथैषा संहिता। स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेत्, अभिव्याहार्षं नेत्येव विद्यात् दिवं संहितागमद्विदुषां देवानामेवं भविष्यतीति शश्वत् तथा स्यात्। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्यसेन स्वर्गेण लोकेन सर्वमायुरेति। वाक्संहितेति पंचालचण्डः। वाचा वै वेदाः सन्धीयन्ते वाचा छन्दांसि वाचा मित्राणि सन्दधति वाचा सर्वाणि भूतानि अधो वागेवेदं सर्वमिति। तद् यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक् तदा प्राणं रेह्लि। अथ यत्र तूष्णीं वा भवति स्वपिति वा, प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेह्लि तावन्योन्यं रीहलो वाग्वै माता प्राणः पुत्रः। तदप्येतदृषिणोक्तम्, एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे। तं पाकेन मनसा पश्यमन्तितस्तमाता रेह्लि स उ रेह्लि मातरमिति। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति। अथातः प्रजापति-संहिता। जाया पूर्वरूपं पतिरुत्तररूपम्। पुत्रः सन्धिः। प्रजननं सन्धानम्। सैषादितिः संहिता। अदितिर्हीदं सर्वे यदिदं किञ्च पिता च माता च पुत्रश्च प्रजननञ्च। तदप्येतदृषिणोक्तम्, अदितिर्माता स पिता स पुत्र इति। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति ॥

## इति प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

### प्रथमः खण्डः

प्राणो वंश इति स्थविरः शाकल्यः। तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिता स्युः, एवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः। तस्यैतस्यात्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्जानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्था-रूपमिति ह स्माह ह्रस्वो माण्डूकेयः। त्रयं त्वेव न एतत् प्रोक्तम्। तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्ठिशतानि त्रीणीतस्तानि सप्तविंशतिशतानि भान्ति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः। स एषोऽहःसमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा। स य एवमेतमहःसमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद अह्नां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति॥

### ॥ अथ द्वितीयः खण्डः ॥

अथ कौण्ठरव्यः। त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टिशतान्यूष्मणां त्रीणि षष्टिशतानि सन्धीनाम्। यान्यक्षराण्यवोचाम, अहानि तानि; यान्यूष्मणोऽवोचाम रात्रयस्ताः; यान्त्सन्धीनवोचाम अहोरात्राणां ते सन्धय इत्यधिदेवतम्। अथाध्यात्मम्। यान्यक्षराण्यधिदेवतमवोचाम, अस्थीनि तान्यध्यात्मम्। यानूष्मणोऽधिदेवतमवोचाम। मज्जानस्ते अध्यात्मम्। एष ह वै सम्प्रतिपाणो यन्मज्जा। एतद्रेतः। न ह वा ऋते प्राणाद्रेतः सिच्यते। यद्वा ऋते प्राणाद्रेतः सिच्येत, पयेत् न सम्भवेत्। यान्त्सन्धीनधिदेवतमवोचाम, पर्वाणि तान्यध्यात्मम्। तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति पंचेतश्चत्वारिंशच्छतानि पंचेतस्तदशीतिसहस्रं भवति। अशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसम्पादयन्ति। स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा। स य एवमेतमक्षसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद, अक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति॥

### तृतीयः खण्डः

चत्वारः पुरुषाः इति बाभ्रवः। शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति। शरीर-पुरुष इति यमवोचाम स एवायं दैहिक आत्मा। तस्य योऽयमशरीरः प्रज्ञात्मा स रसः। छन्दःपुरुष इति यमवोचाम, अक्षरसमाम्नाय एव। तस्यैतस्याकारो रसः। वेदपुरुष इति यमवोचाम, येन वेदान् वेद ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसः। तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्। महापुरुष इति यमवोचाम, संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्या भावयन्नन्यानि।

तस्यैतस्यासावादित्यो रसः । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् । तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तम् —

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

इत्येतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः । एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते छन्दोगाः । एतमस्यामेतं दिवि एवं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते । स एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतं संवत्सरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति ॥

## चतुर्थः खण्डः

दुग्धदोहा अस्य वेदा भवन्ति । न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थानमिति । तदप्येतदृषिणोक्तं —

'यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति न प्रवेद सुकृतस्य पन्थाम्' ॥ इति ।

न तस्यानूक्ते भागो अस्ति । न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवति । तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयात् ; न परस्मै महाव्रतेन स्तुवीत । न परस्मा एतदहः शंसेत् । कामं पित्रे वाऽऽचार्याय वा शंसेत् । आत्मन एवास्य तत् कृतं भवति ॥

स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विहीयेते, चन्द्रमा इवादित्यो दृश्यते, न रश्मयः प्रादुर्भवन्ति, लोहिनी द्यौर्भवति मंजिष्ठा, व्यस्तः वायुः, काककुलायगन्धिकमस्य शिरो वायति, सम्परेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् । स यत् करणीयं मन्येत तत् कुर्वीत । यदन्ति यच्च दूरक इति सप्त जपेत् ; आदित् प्रत्नस्य रेतस इत्येका; यत्र ब्रह्मा पवमानेति षट् ; उद्वयं तमसस्परीत्येका । अथापि यत्र छिद्र इवादित्यो दृश्यते ; रथनाभिरिवाभिख्यायेत, छिद्रां वा छायां पश्येत् तदप्येवमेव विद्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽत्मानं पश्येत् , विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयाताम् , तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत, तद्यथा बटरकाणि सम्पतन्ती दृश्यन्ते ; तानि यदा न पश्येत् तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णा उपशृणुयात् , स एष अग्नेरिव प्रज्वलतो यदा न शृणुयात् तदप्येवमेव विद्यात् । अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा, अमेघे वा विद्युतं पश्येत् , मेघे वा विद्युतं न पश्येत् , महामेघे वा मरीचीरिव पश्येत् तदप्येवमेव विद्यात् । इति

प्रत्यक्षदर्शनानि। अथ स्वप्नाः। पुरुषं कृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति, वराह एनं हन्ति, मर्कट एनमास्कंदयति, आशु वायुरेनं प्रवहति, सुवर्णं खादित्वापगिरति, मध्वश्नाति, बिसानि भक्षयति, एकपुण्डरीकं धारयति, खरैर्वराहैर्युक्तैर्याति, कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणाक्षिमुखो व्राजयति, स यद्येतेषां किंचित् पश्येत् , उपोष्य, पायसं स्थालीपाकं श्रपयित्वा, रात्रीसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात् । स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातो अनादिष्टः श्रोता मन्ता द्रष्टा देष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स आत्मेति विद्यात् ॥

## पञ्चमः खण्डः

अथ खल्वियं सर्वस्यै वाच उपनिषत् । सर्वा ह्येवेमाः सर्वस्यै वाच उपानिषदः इमां त्वेवाचक्षते। पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वराः। अग्ने रूपं स्पर्शाः वोयोरूष्माण आदित्यस्य स्वराः। ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराः। चक्षुषो रूपं स्पर्शा श्रोत्रस्योष्माणो मनसः स्वराः। प्रणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः ॥

अथ खल्वियं दैवी वीणा भवति। तदनुकृतिरसौ मानुषी वीणा भवति। यथोऽस्याः शिर एवममुष्या शिरः ; यथाऽस्या उदरमेवममुष्या अम्भणम् । यथाऽस्यै जिह्वैवममुष्यै वादनम् । यथास्यास्तन्त्रय एवममुष्या अङ्गुलयः। यथास्या स्वराः एवममुष्याः स्वराः। यथाऽस्याः स्पर्शाः, यथा ह्येवेयं शब्दवती तदर्मवती एवमसौ शब्दवती तदर्मवती, यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता। लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधाति। स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति, भूमिप्रास्यकीर्तिर्भवति यत्र क्वचार्यावाचो भाषन्ते विदुरेनं तत्र। अथातो वाग्रसः यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत्। ओष्ठापिधाना न कुलीदन्तैः परिवृता पविः सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः ॥

## षष्ठः खण्डः

अथ हास्मा एतत् कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति । प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः स छन्दोभिरात्मानं समदधात् यच्छन्दोभिरात्मानं समदधात् तस्मात् संहिता। तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा। स यो हैतौ णकारषकारौ अनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदायुष्यमिति विद्यात्। स यदि विचिकित्सेत् सणकारं ब्रुवाणी ३ अणकारां ३ इति, सणकारमेव ब्रूयात्। सषकारं ब्रुवाणीं ३ अषकारां ३ इति, सषकारमेव ब्रूयात्। ते यद्वयमनुसंहितमृचोऽधीमहे, यच्च माण्डूकेयीमध्यायं प्रब्रूमः, तेन नो णकारषकारावुपाप्त-

विति ह स्माह ह्रस्वो माण्डूकेयः । अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीमध्यायं प्रब्रूमः तेन नो णकारषकारौ उपाप्ताविति ह स्माह स्थविरः शाकल्यः । एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः ; किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे ; वाचि हि प्राणं जुहुमः प्राणे वा वाचं यो ह्येव प्रभवः स एवाप्ययः । ता एताः संहिता नानन्तेवासिने प्रब्रूयात् नासंवत्सरवासिने नाप्रवक्त्रे इत्याचार्या आचार्याः ॥

॥ इति तृतीयारण्यके द्वितीयोऽध्यायः ॥

॥ इति तृतीयमारण्यकम् ॥

* * *

# ऐतरेयोपनिषत्

## ऋग्वेदीयोपनिषत्

### शान्तिमन्त्रः

वाङ्मे मनसि प्रतिष्ठिता। मनो मे वाचि प्रतिष्ठितम्। आविरावीर्म एधि। वेदस्य म आणी स्थः। श्रुतं मे मा प्रहासीः। अनेनाधीतेनाहोरात्रान् सन्दधामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। अवतु वक्तारम्।

ओं शान्तिः शान्तिः शान्तिः

### प्रथमः खण्डः

हरिः ओम्

आत्मा वा इदमेक एवाग्र आसीत्। नान्यत् किंचन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत –

अम्भो मरीचीर्मरमापः। अदोऽम्भः परेण दिवम्, द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः, पृथिवी मरः, या अधस्तात् ता आपः।

स ईक्षत इमे नु लोकाः; लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्॥

तमभ्यतपत्, तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम्; मुखात् वाक्; वाचोऽग्निः। नासिके निरभिद्येताम्; नासिकाभ्यां प्राणः; प्राणात् वायुः। अक्षिणी निरभिद्येताम्; अक्षीभ्यां चक्षुः; चक्षुष आदित्यः। कर्णौ निरभिद्येताम्; कर्णाभ्यां श्रोत्रम्; श्रोत्रात् दिशः। त्वङ् निरभिद्यत; त्वचो लोमानि; लोमभ्य ओषधिवनस्पतयः। हृदयं निरभिद्यत; हृदयात् मनः; मनसश्चन्द्रमाः। नाभिर्निरभिद्यत; नाभ्या अपानः; अपानात् मृत्युः। शिश्नं निरभिद्यत; शिश्नाद्रेतः; रेतस आपः॥

---

भाष्यव्याख्येयभागस्यअन्वेषणाक्लेशपरिहाराय स भागः प्रत्येकं दत्तः।

## द्वितीयः खण्डः

ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतन्। तमशनायापिपासाभ्यामन्ववार्जत्। ता एनमब्रुवन्, *आयतनं नः प्रजानीहि, अस्मिन् प्रतिष्ठिता अन्नमदाम* इति।

ताभ्यो गामानयत्। ता अब्रुवन्, *न वै नोऽयमलम्* इति। ताभ्योऽश्वमानयत्। ता अब्रुवन्, *न वै नोऽयमलम्* इति।

ताभ्यः पुरुषमानयत्। ता अब्रुवन्, *सुकृतं बत* इति। पुरुषो वाव सुकृतम्। ता अब्रवीत्, *यथायतनं प्रविशत* इति।

अग्निर्वाग् भूत्वा मुखं प्राविशत्। वायुः प्राणो भूत्वा नासिके प्राविशत्। आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्। दिशश्श्रोत्रं भूत्वा कर्णौ प्राविशन्। ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्। चन्द्रमा मनो भूत्वा हृदयं प्रविशत्। मृत्युरपानो भूत्वा नाभिं प्राविशत्। आपो रेतो भूत्वा शिश्नं प्राविशत्।

तमशनायापिपासे अब्रूताम्, *आवाभ्यां अभिप्रजानीहि* इति। स ते अब्रवीत्, *एतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमि* इति। तस्मात् यस्यै कस्यै च देवतायै हविर्गृह्यते, भागिन्यावेवास्यामशनायापिपासे भवतः।

॥ इति द्वितीयः खण्डः ॥

## तृतीयः खण्डः

स ईक्षतेमे नु लोकाश्च लोकपालाश्च ; अन्नमेभ्यस्सृजा इति। सोऽपोऽभ्यतपत्। ताभ्योऽभितप्ताभ्यो मूर्तिरजायत। या वै सा मूर्तिरजायत, अन्नं वै तत्।

तदेतदभिसृष्टं सत् पराङत्यजिघांसत्। तद्वाचाऽजिघृक्षत्। तन्नाशक्नोद्वाचा ग्रहीतुम्। स यद्धैनद्वाचाऽग्रहैष्यत्, अभिव्याहृत्य हेवान्नमत्रप्स्यत्॥

तत् प्राणेनाजिघृक्षत्। तन्नाशक्नोत् प्राणेन ग्रहीतुम् स यद्धैनत् प्राणेनाग्रहैष्यत्, अभिप्राण्य हैवान्नमत्रप्स्यत्।

तच्चक्षुषाऽजिघृक्षत्। तन्नाशक्नोच्चक्षुषा ग्रहीतुम्। स यद्धैनच्चक्षुषाऽग्रहैष्यत्, दृष्ट्वा हैवान्नमत्रप्स्यत्॥

तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम्। स यद्धैनच्छ्रोत्रेणाग्रहैष्यत्, श्रुत्वा हैवान्नमत्रप्स्यत्॥

तत्त्वचाऽजिघृक्षत्। तन्नाशक्नोत् त्वचा ग्रहीतुम्। स यद्धैनत् त्वचाऽग्रहैष्यत्, स्पृष्ट्वा हैवान्नमत्रप्स्यत्॥

तन्मनसाऽजिघृक्षत् । तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मनसाऽग्रहैष्यत् , ध्यात्वा हैवान्नमत्रप्स्यत् ॥

तच्छिश्नेनाजिघृक्षत् । तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यत् , विसृज्य हैवान्नमत्रप्स्यत् ॥

तदपानेनाजिघृक्षत् । तदावयत् । स एषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ॥

स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत - यदि वाचाऽभिव्याहृतम् , यदि प्राणेनाऽभिप्राणितम् , यदि चक्षुषा दृष्टम् , यदि श्रोत्रेण श्रुतम् , यदि त्वचा स्पृष्टम् , यदि मनसा ध्यातम् , यद्यपानेनाऽभ्यपानितम् , यदि शिश्नेन विसृष्टम् , अथ कोऽहमिति ।

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वाः तदेतन्नान्दनम् । तस्य त्रय आवसथाः त्रयः स्वप्नाः अयमावसथोऽयमावसथोऽयमावसथ इति ॥

स जातो भूतान्यभिव्यैख्यत् । किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीं३ । तस्मादिदन्द्रो नाम । इदन्द्रो ह वै नाम । तमिदन्द्रँ सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥

॥ इति तृतीयः खण्डः ॥

## चतुर्थः खण्डः

(अपक्राभन्तु गर्भिण्यः)

पुरुषे ह वा अयमादितो गर्भो भवति, यदेतद्रेतः । तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति । तद्यदा स्त्रियां सिंचति, अथैतज्जनयति । तदस्य प्रथमं जन्म ॥

तत् स्त्रिया आत्मभूयं गच्छति, यथा स्वमङ्गम् , तथा । तस्मादेनां न हिनस्ति । साऽस्यैतमात्मानं अत्र गतं भावयति ।

सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोऽग्रे अधिभावयति । स यत् कुमारं जन्मनोऽग्रेऽधिभावयति, आत्मानमेव तद्भवयति, एषां लोकानां सन्तत्यै ; एवं सन्तता हीमे लोकाः । तदस्य द्वितीयं जन्म ॥

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यः । वयोगतः प्रैति ; स इतः प्रयन्नेव पुनर्जायते - तदस्य तृतीयं जन्म ॥ तदुक्तमृषिणा –

"गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नथ श्येनो जवसा निरदीयम्" ॥

इति । गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥

स एवं विद्वान् अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥

(यथास्थानं गर्भिण्यः)

॥ इति चतुर्थः खण्डः ॥

## पंचमखण्डः

कोयमात्मेति वयमुपास्महे कतरः स आत्मा ।

येन वा (रूपं) पश्यति, येन वा (शब्दं) शृणोति, येन वा गन्धानाजिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति, यदेतद्धृदयं मनश्च एतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिः धृतिर्मतिः मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति । सर्वाण्यैवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥

एष ब्रह्मा एष इन्द्र एष प्रजापतिः एते सर्वे देवाः । इमानि च पंच महाभूतानि पृथिवी वायुराकाशः आपो ज्योतींषीति, एतानि, इमानि च क्षुद्रमिश्राणीव, बीजानि, इतराणि चेतराणि च अण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि च, अश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरम् , सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥

स एतेनैव प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्य अमुष्मिन् लोके सर्वान् कामान् आप्त्वाऽमृतस्समभवत् समभवदिति इत्युपनिषत् ॥

॥ इति पंचमः खण्डः ॥

## षष्ठः खण्डः

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणी स्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान् सन्दधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमावतु । अवतु माम् । अवतु वक्तारम् । अवतु वक्तारम् ॥ ओं शान्तिः शान्तिः शान्तिः ॥

॥ इति आत्मषट्कं समाप्तम् ॥



# शान्तिमन्त्रः

**वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्यम आणीस्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान् सन्दधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । अवतु वक्तारम् ।**

ओं शान्तिः शान्तिः शान्तिः

यथोक्ततत्त्वविद्याप्रतिपादकग्रन्थपाठे प्रवृत्ता मदीया वाक् सर्वदा मनसि प्रतिष्ठिता । मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठति । मनश्चमदीयं वाचि प्रतिष्ठितम् । यद्यद्विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यते । एवम् अन्योम्यानुगृहीते वाङ्मनसे विद्यार्थं ग्रन्थं साकल्येन अवधारयितुं शक्नुतः । मनसः सावधानत्वाभावे वागिन्द्रियं सुप्तोन्मत्तप्रलापादिवत् यत्किञ्चिदसंगतं ब्रूयात् । तथा च वाचः पाटवाभावे सति गद्गदरूपया वाचा विवक्षितं सर्वं यथावन्नोच्चार्येत । अतस्तयोः अन्योन्यानुकूल्यम् अस्तु इत्येवं प्रार्थ्यते । आविःशब्देन स्वप्रकाशं ब्रह्मचैतन्यमुच्यते । प्रज्ञानशब्देन व्यवहृतत्वात् तस्य आविर्भूतरूपत्वम् । तथाविध हे आत्मन् ! मदर्थम् आविरेधि अविद्यावरणपनयनेन प्रकटीभव । हे वाङ्गनसे ! मे मदर्थं वेदस्य यथोक्ततत्त्वविद्याप्रतिपादकस्य ग्रन्थस्य आणीस्थः विद्यायाः आनयनसमर्थे भवतम् । मे श्रुतं मया श्रोत्रेणावगतं ग्रन्थतदर्थजातं मा प्रहासीः मा परित्यजतु, विस्मृतं मा भूदित्यर्थः । अनेनाधीतेन विस्मरणरहितेन ग्रन्थेनाहोरात्रान् सन्दधामि संयोजयामि । अहनि रात्रौ चालस्यं परित्यज्य निरन्तरं पठामि इत्यर्थः । अस्मिन् पठिते ग्रन्थऋतं परमार्थभूतं वस्तु वदिष्यामि । विपरीतार्थवदनं कदाचिदपि मा भूदित्यर्थः । ऋतं मानसं सत्यं वाचिकं, मनसा वस्तुतत्वं विचार्य वाचा वदिष्यामि इत्यर्थः । तन्मया वक्ष्यमाणं ब्रह्मतत्त्वं मां शिष्यम् अवतु सम्यग्बोधेन पालयतु । तथा तद् ब्रह्मतत्त्वं वक्तारम् आचार्यमवतु, बोधकत्वसामर्थ्य प्रदानेन पालयतु । पुनरप्यवतु मामित्याद्युक्तिः फलविषया पूर्वं साधनकाले शिष्याचार्ययोः पालनं प्रार्थितम् इदानीं फलकालेपि प्रार्थ्यते । तत्र शिष्यस्याविद्यातत्कार्यनिवृत्तिः फलम् । आचार्यस्य तादृशशिष्यदर्शनेन विद्यासम्प्रदायप्रवृत्तिप्रयुक्तः परितोषः फलम् । अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धकाः विघ्ना परिहियन्ते विद्योत्पत्तेरूर्ध्वम् असम्भावनाविपरीतभावनोत्पादका विध्ना परिहियन्ते । अवतु वक्तारम् इत्यभ्यासोऽध्यायसमाप्त्यर्थो द्वितीयारण्यकसमाप्त्यर्थश्च ॥ (सायणभाष्यम् )*

---

* रङ्गरामानुजमुनिभिः अव्याख्याततत्वात् सायण भाष्यमेव दत्तम् ।

॥ श्रीः ॥

# ऐतरेयोपनिषत्

## प्रथमः खण्डः

[आत्मनः सृष्टिसङ्कल्पः]

**[1]आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किंचन मिषत्॥ स ईक्षत लोकान्नु सृजा इति ॥ १ ॥**

## प्रतिपदार्थदीपिका

भारद्वाजरामानुजार्यविरचिता

[मङ्गलाचरणम्]

शेषांशेनावतीर्योर्व्यां बलराम इति श्रुतः ।
श्रीकृष्णस्यानुजो योऽसौ तं वन्दे धेनुकान्तकम् ॥ १ ॥

[आचार्यवन्दनम्]

श्रीशं श्रियं शठारातिं भाष्यकारादिदेशिकान् ।
पूर्वान्वन्दे गुरून् [2]वात्स्यान् श्रीनिवासावधीनहम् ॥ २ ॥
श्रीमन्तं वरवरमुनिं भाष्यकारांशजं यतिम् ।
नत्वा सदैतरेयस्य श्रुतेर्व्याख्यां करोम्यहम् ॥ ३ ॥
श्रीमङ्गलाद्रिनिलय श्रीनृसिंह श्रितार्थद ।
परमवैदिकसिद्धान्ततत्वरत्नाकराभिदं ॥ ४ ॥
त्वत्परत्वप्रकाशन्तं ग्रन्थं त्वं पाहि सर्वदा ।
त्वत्परत्वद्विषन्तस्तान् नाशयस्वासुरान्तक ॥ ५ ॥

---

1. तत्र प्रथमं कारणस्यैव ध्येयतया परमात्मनः कृत्स्नजगत्कारणत्वमुपदिशति आत्मा वा इदमिति ।

2. वत्सगोत्रोद्भवान् ।

पूर्वोक्त तैत्तिरीयान्तर्गतनारायणनामकपंचमप्रश्नगत 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्' इत्यनुवाकप्रतिपाद्यः नारायणः 'नारायणपरो ज्योतिरात्मा नारायणः परः' इत्युक्तनारायण एवअस्यां श्रुतौ आत्मशव्देन प्रतिपाद्यत इत्याह । **आत्मा वा इति । अग्रे** - सृष्टेः पूर्वं **इदं** - चेतनाचेतात्मकं जगत्**आत्मा** आप्नोति इत्यात्मा - इदं सर्वं अतीत्य आत्मा इदं सर्वं अतति*अत - सातत्यगमने* (धा.पा.३८) इति धातुः - सर्वं एतदनुसृत्य वर्तत इति आत्मा सर्वभूतान्तर्यामी । *एको ह वै नारायण आसीत्* (महो. १-१) इत्युक्तसर्वव्यापकः सर्वज्ञः श्रीमन्नारायणः **एकः** - अधिष्ठात्रन्तररहितः **आसीत्** - स्थितः **अन्यत्** - एतत् नारायणादन्यत् **किंचन** - एतत्समानं वा अधिकं वा वस्तु किंचदपि न मिषत् न व्यापारवदभूत् *मिष - स्पर्धायाम्* (धा.पा. १३५३) इति धातुः, मिषति - स्पर्धतीति मिषत् विरोधिवस्तु *न ब्रह्मा नेशानः* (महो.१-१) इति श्रुत्यन्तरात् नारायणपरत्वविरोधिनः ब्रह्मरुद्रादयो न सन्तीत्यर्थः । **सः** - सर्वज्ञः एकः नारायणः **लोकान्** - प्रलयकाले स्वात्मनि लीनान् नामरूपादिभिः विहीनान् भूरादिचतुर्दशलोकान् नामरूपविहीनब्रह्मादिसर्वजीवान् वा **सृजै इति** - नामरूपवतः करोमीति **ईक्षत** - ईक्षणं कृतवान् अपश्यत् तत्तत्प्राणिकृतपुण्यपापादिकं अपश्यत् सर्वज्ञत्वात्साक्षात्कृतवान् ; *वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति* (ब्र.सू. २-१-३४) *पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्मणा भवति* (बृ.उ. ६-४-५) इति श्रुतेः तत्तत्प्राणिकृतकर्मानुगुणं देवमनुष्यादि सृष्टिं कृतवानित्यर्थः ।

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ (भ.गी. ९-७)

इत्यादिना इयं श्रुतिः भगवता उपबृंहिता ॥

## प्रकाशिका

रङ्गरामानुजमुनिविरचिता

[मङ्गलाचरणम्]

अतसीगुच्छसच्छायमचिंतोरस्स्थलं श्रिया ।
अंजनाचलश्रृङ्गारमंजलिर्मम गाहताम् ॥ १ ॥

[आचार्यवन्दनम्]

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
आत्मषट्कस्य विवृतिं करवाणि यथामति ॥ २ ॥

भोग्यभोगस्थान-तदुपकरणविलक्षणप्रत्यगात्म-तदात्मभूतपरमात्मस्वरूपप्रतिपादनाय इन्द्रादिपदानामपि हेयत्वप्रदर्शनाय च प्रकरणम् आरभ्यते - **आत्मा वा इदमेक एवाग्र आसीत्** ।

**इदं** - जगत् सृष्टेः प्राक् **एक** आत्मैव **आसीत्**। वै शब्दः अवधारणे *तमः परे देव एकीभवति* (सुबा.उ.२) इत्युक्तरीत्या परमात्मना अविभक्ततमोवस्थमेवासीदित्यर्थः। ब्रह्मादिषु जगत्कारण-भूतेषु सत्सु कथमेक - एव आसीत् इत्युच्यते इत्यत्राह - **नान्यत् किंचन मिषत्**। तद्व्यतिरिक्तं अन्यत् , (किंचन) किमपि, (सर्वं) निर्व्यापारमेव आसीत् । अनेन करणकळेबरादिराहित्यम् अभिप्रेतम्। *एको ह वै नारायण आसीत्। न ब्रह्मा, नेशानः* (महो. १-१) इत्यादि श्रुत्यर्थः अनु-सन्धेयः। **स ईक्षत लोकान्नु सृजा इति**। लोकान् सृजानीति सङ्कल्पमकरोत् इत्यर्थः ॥ १ ॥

## आनन्दभाष्यम्

रामानन्दाचार्य विरचितम्

[मङ्गलाचरणम्]

लीलामिच्छुर्विधातुं जगदिदमखिलं सन् सिसृक्षुः कृतेक्षः
क्ष्मादिभ्यो वीक्षयैव प्रथममरचयल्लोकपालान् स लोकान्।
स्थानान्येषामथान्नानि च विरचितवान् क्षुत्पिपासोपशान्त्यै
स्वात्मारामोऽपि रामः स भवतु सततं श्रेयसे ब्रह्म साक्षात् ॥ १ ॥
आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम्।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ॥ २ ॥

[आचार्यवन्दनम्]

सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी।
श्रीमन्तं राघवानन्दाचार्यगुरुं नमाम्यहम् ॥ ३ ॥
कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम्।
ऐतरेयोपनिषदो भाष्यमानन्दसंज्ञकम् ॥ ४ ॥

**इदं** - दृश्यमानं जगत्। **अग्रे** - सृष्टेः प्राक्। **एक आत्मा एव** - आसीत् प्रलयकाले परमात्मना सह एकीभावेन नामरूपविभागरहिततया एकत्वेन व्यवहारास्पदभूत **आत्मा** - आप्नोति व्याप्नोति सर्वमित्यात्मा स्वज्ञानशक्त्या स्वरूपतश्च सर्वव्यापकः। एतेन सर्वज्ञत्वमस्य स्वाभाविकः धर्म इत्युक्तं भवति । यद्वा अत्ति सर्वं जगत् इत्यात्मा सर्वसंहरणकर्ता इति । आदत्ते वा सर्वमित्यात्मा। आदानमिह अव्याकृतेभ्यः नामरूपकरणाय ग्रहणम्। सर्वाविर्भाव- कारणत्वमुक्तं भवति। अतति सर्वमित्यात्मा वा। *अत - सातत्यगमने* (धा.पा.३८) इति धातुः। सर्वव्यापकता भक्तपरित्राणार्थमवतारग्रहणकर्तृता चेति फलति । स्मृतिश्चात्र भवति *यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततोभावः तस्मादात्मेति कीर्त्यते ॥* (लिङ्ग.पु. ७०-९६)

इति । एवकारेण इतरद् व्यवच्छिनत्ति । सर्गकाले स्थूलचिदचिद्विशिष्टोऽयं परमात्मा सर्ग-प्राक्काले सूक्ष्मचिदचिद्विशिष्ट एव आसीत् इत्यन्तर्गतोऽर्थः । एवकारव्यवच्छेद्यमर्थं श्रुतिः स्वयमेव दर्शयति - **नान्यत् किंचनमिषदिति** । निमेषोन्मेषव्यापारजातं मिषधातुना अभिप्रेतम् । सर्गकाले चेतनजातं यथा कार्यकरणोपयुक्तव्यापारविशिष्टं भवति सशरीत्वात् तथा सर्गप्राक्काले न तादृशव्यापारविशिष्टं शरीररहितत्वात् इति वाक्यार्थः । व्यापारराहित्यमात्रमेव एवकारेण निषिध्यते न तु सत्तैव । परमात्मव्यतिरिक्तस्य सूक्ष्मरूपेणचिदचितां तदानीमपि भावात् । एतेन परमात्म-व्यतिरिक्तं किमपि नासीत् इति परोक्तव्याख्यानमपास्तं भवति । व्यापारनिषेध उपलक्षणं नामरूपविभागस्यापि । तेन शरीरेन्द्रियराहित्यं बोधितं भवति ।

स सूक्ष्मचिदचिद्विशिष्टः परमात्मा । ईक्षत इत्यत्र छान्दस आडागमाभावः । **ऐक्षत** - सङ्कल्पं कृतवान् । सङ्कल्पप्रकारमेवाह - **लोकान्नु सृजा इति** । इति शब्दः सङ्कल्पस्वरूपप्रदर्शनपरः । लोकान् सृजानि प्राणिनां कर्मफलोपभोगयोग्यान् स्थानविशेषान् लोकशब्दवाच्यान् करवाणि इत्येतत् । *सृजै* इत्यत्र आत्मनेपदं छान्दसम् ।

## सुबोधिनी

गोपालानन्दस्वामिविरचिता*

**अग्रे** - सृष्टेः प्राक् आसीत् । ननु व्याहतम्, **इदं** - सृज्यं सृष्टेः प्राक् आसीत् इति । नैतत् ; एवं नासीत् किन्तु **आत्मा आसीत्** - आप्नोति - व्याप्नोति सकलमिदं सर्वात्मना आधारतया नियन्तृतया शेषितया च सोऽयं परमात्मा आसीत् ।

ननु सृज्यं चेत् आत्मनोऽन्यत् इदं आत्मा आसीदिति व्याहतम्, यदि अनन्यत् इदानीमपि आत्मैवेति अग्रे आत्मा आसीत् इत्यपेतार्थम्, अविशेषात् । न । एक एव आत्मा आसीत् नामरूपविभागरहित आत्मा आसीत् । ननु - अविकारिणोऽस्य नामरूपान्वयायोगान्नामरूपापन्नम् इदं तद्रहित आत्मा आसीत् इत्यनुपपन्नम् । नैतत् । अविकारिणोपि अस्य *अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि* (छां.उ. ६।३।२) इति नामरूपान्वयो हि श्रुतः । *तदनुप्रविश्य सच्च त्यच्चाभवत्* (तै.आन. ६) इति च । स्वतनुभूतचिदचिद्द्वारा हि तद्योगतदभावौ कालभेदेन तस्मिन् घटते ।

एक एव इत्यवधारणार्थं विशदयति - **नान्यत् किंचनेति** । **मिषत्** - उन्मिषन्निमिषद्वा किमपि नासीत् क्रियाग्रहणं नामरूपयोरुपलक्षकम् । नामरूपविकारापन्नं किमपि नासीदिति । आसीदिति निर्देशात् नासीदिति सौगतः शून्यवादः, इदमग्रे आसीत् इति निर्देशात् कार्यस्य

---

* श्रीगोपालानन्दस्वामिभिः "दशोपनिषद्भाष्यम्" इति नाम्ना भाष्यस्य कृतत्वात्, मङ्गलाचरणादिकं आरंभे ईशावास्योपनिषद्भाष्ये कृतं द्रष्टव्यम् ॥

सर्वात्मना प्रागसत्तावादः काणादः, पूर्वम् आत्मा आसीदिति निर्देशात् आनुमानिक-प्रधानोपादानजगद्वादः कापिलश्च व्यावर्तितः। यदिह वृत्तवर्तिष्यमाणयोः सङ्गतिमुपपादयता निर्विशेषाद्वितीयनित्यविज्ञानवादिना मुमुक्षोः अविदुषः विदुषश्च पारिव्राज्य एव अधिकार इति समर्थयितुं पराक्रान्तम् , तदेतत्तदभिमतनित्यविज्ञानवादस्य उपनिषदि नावकाश इत्यन्यत्रनिरूपणादेव अपहतप्रायमिति नेह तन्निरसनप्रयासः पृथगपेक्ष्यते।

**स** - आत्मा **ईक्षत** - ऐक्षत, सङ्कल्पितवान्। किमिति? **लोकान् सृजै इति।**

[जगत्सृष्टिक्रमः]

**स इमान् लोकानसृजत। अम्भो मरीचि(ची)र्मरमापः। अदोऽम्भः परेण दिवम् द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः, पृथिवी मरः, या अधस्तात् ता आपः॥ २॥**

**प्र.दी. - स ईक्षत लोकान् सृजा इति स इमान् लोकान् असृजत** इत्युक्तत्वात् ब्रह्मणि सर्वप्रपंचः रज्जुसर्पवदारोपितः इति भ्रान्तिवादो निरस्तः इति वेदितव्यः। **स इमान् लोकानसृजत** इति। **सः** - सर्वज्ञः, परमात्मा नारायणः **इमान्** - भूरादि **लोकान् असृजत** - तान् कान् इत्यत्राह - **अम्भो मरीचिर्मरमापोऽदोम्भ** इति, **अदोऽम्भः** एतदम्भश्शब्दवाच्यो लोकः दिवः **परेण** - द्युलोकादुपरिभागे वर्तते। एतदम्भसो लोकस्य द्यौः - द्युलोकः **प्रतिष्ठा** - आश्रय इत्यर्थः। द्युलोकादधस्तात् **अन्तरिक्षम्** - अन्तरिक्षलोको वर्तते। अयमेव लोकः **मरीचयः** - इत्युच्यन्ते। सूर्यकिरणसम्बन्धान्नक्षत्रकान्तिसम्बन्धाद्वा मरीचय इति आकाशस्य एकत्वेऽपि प्रदेशभेदात् बहुत्वमुक्तम् **पृथिवीमरः** - अन्तरिक्षलोकस्य **अधः** - अधस्तात् विद्यमानः भूलोकः पृथिवी मरः इत्युच्यते पृथिव्यां विद्यमानानि भूतानि विशेषेण म्रियन्त इति पृथिवी मरो भूलोकः सृष्टः - अस्याः, **अधस्तात्** - अधोभागे विद्यमानाः **याः आपः** - पंचमहाभूतसहिता अपि उदकप्रधानत्वात्ते लोकाः पाताळलोकस्थजनैः आप्यमानत्वात् वा आप्नोतेर्धातोः अर्थयोगाच्च ते अधोलोकाः अब्-लोकाः इत्युच्यन्ते। तस्मादन्तरिक्षादीमे लोकाः मरमापोदोम्भ इत्युच्यन्ते। *अथातो ब्रह्मजिज्ञासा* (ब्र.सू. १-१-१) इत्यारभ्य *ईक्षतेर्नाशब्दम्* (ब्र.सू. १-१-५) इत्यादिसूत्रैः जगज्जन्मादिकारणं परब्रह्म ईक्षत्यादिगुणयुक्तमितिसूत्रितं व्यासार्यैः।

**प्र. - स इमांल्लोकानसृजत्।** तानेव लोकानाह **अम्भोमरीचीर्मरमापः।** अम्भः प्रभृतीन् स्वयमेव श्रुतिः व्याचष्टे **अदोम्भः परेण दिवम्।** अम्भश्शब्दवाच्यो लोको द्युलोकात् परस्ता-दित्यर्थः। **द्यौः प्रतिष्ठा।** तस्य अम्भसो लोकस्य द्यौराश्रय इत्यर्थः। **अन्तरिक्षं मरीचयः।** अन्तरिक्षमेव मरीचिलोक इत्यर्थः। सूर्यादिमरीचिव्याप्तत्वात् मरीचिरित्युच्यते। मरीचयः इति

[1]बहुत्वोक्तिर्नि.......यी भेदायत्ता? मरीचिलोकादिभेदाभिप्राया । **पृथिवीमरः ।** म्रियन्ते अस्मिन् भूतानि इति **मरः पृथिवी** पृथिवीलोकः । या **अधस्तात् ता आपः ।** पृथिवीलोकस्याधस्तना लोका आप इत्युच्यन्त इत्यर्थः ।

**आ.भा. - सः** - परमात्मा तथा सङ्कल्पविशिष्टः सन् **इमान्** - वक्ष्यमाणाभिधानान् **लोकान्** - भोगाश्रयभूतान् **असृजत** - सृष्टवान् । यथा कुलालः सृज्यमानघटोदंचनादिविषयकं सङ्कल्पं करोति 'इदं प्रथमतः कुर्यां तत इदम्' इत्यादिकं ततश्च सङ्कल्पितमर्थं सङ्कल्पक्रमेण सृजति, तथैव परमात्मापि सङ्कल्पपूर्वकं लोकसर्गम् अकरोत् इत्येतत् । यद्यपि कुलालादिः कृतसङ्कल्पोऽपि मृदादिसामग्रीवैकल्ये प्राप्ते नापि सृजति विलम्बितो वा सृजति न तथा परमात्मा अस्य [2]सत्यसङ्कल्पत्वात इतरसामग्रीसहकारानपेक्षत्वाच्च । सर्वशक्तिरयं गीयते । सत्यसङ्कल्पताऽपि सहकार्यान्तरापेक्षामस्य निवारयति । ततः कृते सङ्कल्पे अयमविलम्बेनैव सृजति । न न सृजति । न वा विलम्बेन सृजति

सृष्टानां लोकानां नामानि निर्दिशति - **अम्भ** इत्यादिना । अम्भः, मरीचिः, मरः, आपः, इतीमान् लोकान् असृजत । सृष्टानां लोकानाम् अम्भ इत्यादि नामकरणहेतुगर्भितान् अर्थान् स्वयमेव व्याचष्टे श्रुतिः - **अदोम्भ** इत्यादि । **परेणदिवं** - द्युलोकात् उपरिष्टात् वर्तमाना ये लोकाः तेषां प्रतिष्ठा आश्रयभूता द्यौः द्युलोकश्च अदोम्भः । अम्भःशब्देन व्यपदेशभाजस्ते सर्वे । अयमेव अम्भःशब्दार्थ इत्येतत् । अम्भशब्दवाच्यलोकस्थिता देवा वृष्टिद्वारा भौमाः प्रजा भावयन्ति, तस्मादम्भःप्राधान्यात्तेषां लोकानां अम्भ इति संज्ञा । अम्भः शब्दश्च जलपर्यायः । **अन्तरिक्षं** - अन्तरिक्षलोक एव **मरीचयः** - मरीचिलोकः । आदित्यकिरणपरिव्याप्तो हि अन्तरिक्षलोकः तस्मात् मरीचिपदभाक् । मरीचय इति बहुवचनं तु मरीचिव्याप्तान्तरिक्षलोकस्य प्रदेशनानात्वम् अभिप्रेत्य । मरीचीः - इत्यत्र दीर्घः छान्दसः । **पृथिवी मरो** - म्रियन्ते भूतानि यत्र स मरः । पृथिव्यां हि मरणधर्माण एव जायन्तेऽतो जायमाना म्रियन्ते तस्मात् पृथिवी भूलोको मरशब्देन उच्यते । मुक्तिकामैः शरीरस्य विनाशित्वं विनिश्चित्य मोक्षार्थं द्रुतगत्या प्रयतनीयम् इत्यभिप्रायो भूलोकस्य मर इति संज्ञाविधौ गम्यते । **या अधस्तात् ता आपः** । भूलोकस्य अधोभागं वर्तमाना ये लोका अतलवितलादिपातालान्ताः ते सर्वे आप इत्युच्यन्ते । यतः ते लोका अपः प्रविश्य समुद्रमध्ये गन्तव्या भवन्ति ततः तेषामप्शब्दव्यपदेशः । अयंच लोकसर्गः पंचभूतसृष्ट्यनन्तरमेव तत एव लोके सिसृक्षापि महदादिसृष्टेः पश्चादेव ॥

---

1. अत्र ग्रन्थः पतितः ।
2. अस्मिन् विषये — 'उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि' ॥ (2-1-24) तथा 'विकरणत्वान्नेति चेत् तदुक्तम्' (2-1-31) इति सूत्रद्वयं द्रष्टव्यम् ।

**सु.** -एवं सङ्कल्प्य यथासङ्कल्पमसृजत। ऐक्षत अथ सपदि असृजत, सङ्कल्पमात्रमेव अस्य सर्गे विलम्बः, सर्वज्ञः सर्वशक्तः सर्वप्रकारैरवस्थितो ह्येष सर्वस्य आत्मा, नास्य कुलालादेरिव सिसृक्षोः सामग्रीसम्पादनविलम्बः, न हि आत्मनः अन्यत्र उपादानम् उपकरणं वा, येन स्यात् सङ्कल्पसर्गयोः व्यवधानम्। कान् लोकान् ? आह - **अम्भ इति। अम्भो, मरीचिः, मरम्, आपः,** इत्येतान् लोकान्॥ इयं सिसृक्षा सर्गश्च महदादिक्रमेण अण्डान्तसिसृक्षासर्गसमनन्तरभाविनी। तदुपलक्षकमेतन्महदादिसर्गस्य। अम्भःप्रभृतिशब्दैः विवक्षितान् लोकान् श्रुतिः स्वयमेव व्याचष्टे - **अद** इत्यादिना। यदिदमम्भः - अम्भः शब्देन वितक्षितम्; स तु लोकः **परेणदिवम्** - द्युलोकादूर्ध्वम्; **द्यौः** - अस्य उपरितनस्य **प्रतिष्ठा** - तथा च अम्भः पदेन द्युलोकाश्रया ये उपरितनालोका यश्च द्युलोकः सर्वोऽपि विवक्षित इति भावः। वृष्टिलक्षणाम्भःप्राधान्यात् तेन शब्देन निर्देशः, ततो वृष्टिरुद्भवति। **अन्तरिक्षंमरीचयः** - मरीचिप्राधान्यात् अन्तरिक्षं मरीचिशब्देन निर्दिश्यते। यद्यपि अन्तरिक्षमेकम्, अथापि तत्र वर्तमानानां मरीचीनां बाहुल्यात् बहुवचनम्। **पृथिवी मरः** - म्रियन्ते हि पृथिव्याम्, मरणप्राचुर्यात् पृथिवी मरमुच्यते। पृथिव्या अधस्तात् ये लोकाः ते आप उच्यन्ते। तदेवमण्डान्तर्वर्तिनो लोकाः चतुर्धा प्रविभज्य प्रदर्शिताः॥

[लोकपालसृष्ट्यर्थं विराट्पुरुषाविर्भावः]

**स ईक्षत इमे नु लोकाः, लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्॥ ३॥**

**प्र.दी.** - मया पूर्वं **इमे लोकास्तु** अम्भःप्रभृतयः सृष्टाः न शब्दस्तुशब्दार्थकः लोकपालाभावे इमे लोकाः नश्येयुरिति मत्वा **सः** - पुनरपि **ईक्षत** - ईक्षित्वा लोकपालान् असृजत लोकान् पालयन्तीति लोकपालकाः तान् **सृजा** - सृजामि इति पुनरीक्षत इत्यत्वयः। **सः** - परमात्मा **अद्भ्यः** - प्रकृतिविकारभूतपृभिव्यादिपंचभूतसंसृष्टेभ्यः अद्भ्य एव पुरुषमुपादाय शिरः पाण्यादिमन्तं पुरुषं पृथिव्यां संयोजितवान्। समष्टिजीवं ब्रह्माण्डाधिपतिं [1]विराट्पुरुषं प्रकृतौ संयोजितवान् इत्यर्थः।

**प्र.** - **स ईक्षत - सृजा इति।** भोगस्थानसृष्ट्यनन्तरम्, अम्भःप्रभृतयः लोकाः सृष्टाः। एषां लोकानां पालकान् सृजे इति सङ्कल्पम् अकृत इत्यर्थः। **सोद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्।** सः अप्शब्दोपलक्षितेभ्यः पंचभ्यः भूतेभ्यः शिरःपाण्यादिमन्तं पुरुषं कर्तुं **समुद्धृत्य** - अद्भ्यः समुपादाय **अमूर्च्छयत्** - पिण्डं कृतवान् इत्यर्थः।

---

1. **विराट्पुरुषः** - सोयं विराट्पुरुषः अनिरुद्धाख्यो अवतार विशेषः। विशेषेण राजत इति विराट्। 'तस्माद्विराडजायत। विराजो अधिपुरुषः' इति श्रुतिः (पु.सू.) तथा चोक्तं मोक्षधर्मे - 'ईश्वरो हि जगत्स्रष्टा विभुर्नारायणो विराट्। अनिरुद्ध इति प्रोक्तः अंशानां प्रभवाप्यये॥ इति।

**आ.भा. - सः** - परमात्मा भोगस्थानभूतान् अम्भःप्रभृतीन् लोकान् सृष्ट्वा। पुनरपि **ईक्षत** - सङ्कल्पमकरोत्। सङ्कल्पाकारमाह - **इमे नु लोका**। अम्भःप्रभृतय इमे लोका मया सृष्टाः सन्ति अतःपरं एषां लोकानां पालकान् सृजे सृजानि इति। लोकपालकानामभावे सृष्टा अपि लोका असृष्टा एव रक्षकाभावे तेषां विनाशस्य अचिरभावित्वात्। एवं लोकपालसर्गसङ्कल्पवान् **स** - परमात्मा। **अद्भ्य एव** - इत्यत्र अप्पदं पंचीकृतभूतानामुपलक्षकं तेन पंचीकृतेभ्यो भूतेभ्य एव येषां भागतः चतुर्विधलोकसृष्टिः तेभ्य इत्येतत्। **पुरुषं** - चिकीर्षितपुरुषाकृतिं पंचीकृतभूतभागविशेषं समृद्धृत्थ समादाय **अमूर्च्छयत्** - पुरुषाकृतिकरणोपयुक्तं दण्डवत् लम्बायमानम् इत्येतत्। पिण्डं कृतवान्। कुलालः यथा घटादिचिकीर्षया मृदः समुद्धरति मृद्भागं तंच घटादिकरणोचितपिण्डाकारं करोति तद्वत्।

**सु. - स** - लोकानुक्तान् सृष्ट्वा पुनरैक्षत - सङ्कल्पितवान्, **इमे नु लोकाः** सृष्टाः, अथ **लोकपालान्नु सृजे इति**, लोकपालरहिता लोका हि विनश्येयुरिति। एवं सङ्कल्प्य **स** - परमात्मा **अद्भ्य एव** - अद्भ्य इत्युपलक्षकं भूतानाम् पंचीकृतेभ्यो भूतेभ्य इति यावत्, **पुरुषम्** - पुरुषाकृतिम्, **समुद्धृत्य** - सङ्कल्पमात्रेण समुत्पाद्य तं पुरुषम् **अमूर्च्छयत्** - स्वात्मकजीवानुप्रवेशाधानेन उच्छ्रायविशिष्टमकरोत्, अवर्धयत् इत्येतत्। असति जीवानुप्रवेशे शिरःपाण्यादिलक्षणः पिण्डविशेषोऽपक्षीयेत, नोपचीयेत। सोऽयं समष्टिपुरुषः हिरण्यगर्भः।

[लोकपालसृष्टिः]

**तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम्; मुखाद्वाक्; वाचोऽग्निः नासिके [1]निरभिद्येताम्; नासिकाभ्यां प्राणः; प्राणाद्वायुः। अक्षिणी निरभिद्येताम्; अक्षीभ्यां चक्षुः चक्षुष आदित्यः। कर्णौ निरभिद्येताम्; कर्णाभ्यां श्रोत्रम्; श्रोत्राद्दिशः। त्वङ्निरभिद्यत; त्वचो लोमानि; लोमभ्य ओषधिवनस्पतयः। हृदयं निरभिद्यत; हृदयान्मनः; मनसश्चन्द्रमाः। नाभिर्निरभिद्यत; नाभ्या अपानः, अपानान्मृत्युः। शिश्नं निरभिद्यत; शिश्नाद्रेतः, रेतस आपः॥ ४॥**

**इति प्रथमः खण्डः**

**प्र.दी. - तमभ्यतपदिति**। **तं** - पुरुषविधंपिण्डमुद्दिश्य **अभ्यतपत्** - तमुद्दिश्य नारायणः सङ्कल्पं कृतवानित्यर्थः। 'यस्य ज्ञानमयं तपः' (मुं.उ. १-१-१०) इति श्रुतेः। **अभितप्तस्य** - तस्य विराड्देहस्य **मुखं निरभिद्यत** - मुखाकारं रन्ध्रं अजायत। यथा पक्षिणो अण्डं निरभिद्यत - एवं तस्मान्निर्भिन्नात् मुखात् **वाक्** - वाचः करणं - वागिन्द्रियं **निरभिद्यत** - उत्पन्नमासीत्। वागिन्द्रियाधिष्ठानदेवता **अग्निः** जातः। **वायुः** - लोकपालः जातः आसीदित्यर्थः। **नासिके**

---

1. **निरभिद्येयाताम्** इति आनन्दभाष्यसंमतः पाठः।

**निरभिद्येतां** - नासिकागोळके उत्पन्ने - ताभ्यां गोळकाभ्यां **प्राणः** - घ्राणेन्द्रियं, **प्राणात् वायुरिति** तदधिष्ठाता। एतत्त्रयंच उत्पन्नमासीत्। अनन्तरम् **अक्षिणी निरभिद्येतां**, उत्पन्ने **अक्षिभ्यां चक्षुः** - नेत्रेन्द्रियं, **चक्षुषः आदित्यः**- नेत्रेन्द्रियात् तदधिष्ठानदेवता सूर्यः जातः । **कर्णौ निरभिद्येताम्** - श्रोत्रगोळके उत्पन्ने। **कर्णाभ्यां श्रोत्रं** - श्रोत्रेन्द्रियं श्रोत्रात् - तदधिष्ठानदेवता **दिशः** जाताः । **त्वङ्निरभिद्यत** - जातात्वगिन्द्रियं जातं। त्वचो लोमानि जातानि तेभ्यः **ओषधिवनस्पतयः** - तदधिपाःजाताः सर्वत्राधिष्ठानं करणं देवता च एतत्त्रयं क्रमेणनिर्भिन्नम् । **हृदयं निरभिद्यत** - अन्तःकरणाधिष्ठानम् । **हृदयान्मनः** निरभिद्यत मनः अन्तकरणं जातम्। तथा च श्रुतिः *चन्द्रमा मनसो जातः* इति (पु.सू. १४) मनसश्चन्द्रमानिरभिद्यत **नाभिर्निरभिद्यत** - सर्वप्राणनिबन्धनस्थानम् । **नाभ्या अपानो** जातः । **अपानान्मृत्युर्निरभिद्यत । शिश्नंनिरभिद्यत** - प्रजननेन्द्रियस्थानं जातम्। **शिश्नाद्रेतो** जातं **रेतस आपः**, जाताः सर्वत्राधिष्ठानं देवता करणं चेति त्रयं जातम् ॥

**इति प्रथमखण्डप्रतिपदार्थदीपिका**

**प्र. - तमभ्यतपत्** । **तं** पिण्डं पुरुषविधमुद्दिश्य **अभ्यतयत्** - अभिध्यानं सङ्कल्पं कृतवान्। **तस्याभितप्तस्य मुखं निरभिद्यत, यथाण्डम्**। तस्याभितप्तस्य पिण्डस्य मुखाकारं सुषिरमजायत, यथा पक्षिणोऽण्डम् , तथेत्यर्थः । **मुखाद्वाग्वाचोऽग्निः** । मुखादधिष्ठानात् वागिन्द्रियम् । उत्पन्नम्। ततो या तदधिष्ठातृदेवता । एवंच अधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमित्यर्थः । एवमुत्तरत्रापि । **नाभ्या अपानः** । **अपानः** - पायुरिन्द्रियमित्यर्थः । **अपानान्मृत्युः** । तस्याधिष्ठानदेवतेत्यर्थः। **शिश्नाद्रेतः**। रेतश्शब्देन प्रजननेन्द्रियमुच्यते। **रेतसो आपः**। अ (अब?) भिमानिदेवतैव तस्याधिष्ठानदेवता इत्यर्थः ॥

**इति प्रथमखण्डप्रकाशिका**

**आ.भा.** - पिण्डकरणानन्तरं पुरुषाकारौपयिकानवयवानपि मुखादीन् तत्र अकरोत् इति वक्तुमाह - **तमभ्यतत्** इति । **तं** - पिण्डं पुरुषाकारं विधातुम् **अभ्यतपत्** - अभिध्यातवान् । सङ्कल्पितवान् इत्येतत् । 'यस्य ज्ञानमयं तपः' (मुं.उ. १-१-१०) इति श्रुतेः । अभिध्यानं, सङ्कल्पः, तपश्च ज्ञानविशेषरूपः समानार्थ एव। **तस्य** - पिण्डस्य **अभितप्तस्य** परमात्मनः पुरुषाकारसङ्कल्पगोचरस्य सङ्कल्पप्रभावादेव **मुखं निरभिद्यत** - मुखाकारं विवरमजायत। तत्र दृष्टान्तमाह - यथाण्डम् । पक्षिणः शावकगर्भमण्डं शावकनिस्सरणसम्यक्परिपाके सति यथा भिद्यते शावकनिर्गमनोपयुक्तविवरविशिष्टं भवति तथैव वागादिनिस्सरणोपयुक्तमुखाकारविवरविशिष्टः पिण्डोऽभवत् । परमात्मसङ्कल्पमात्रेण इति भावः । **मुखात्** - निर्भिन्नात् , वागिन्द्रियस्थानभूतात् **वाक्** - वागिन्द्रियं **निरभिद्यत** - समुत्पन्नम् इत्येतत्। **वाचः** - समुत्पन्नात् वागिन्द्रियात्

**अग्निः** - वागिन्द्रियाधिष्ठाता देवो यो लोकपालतया व्यवह्रियते लोकविशेषपालकत्वात् स समुदपद्यत ।

एवमग्निरूपलोकपालसर्गं कृत्वा वायुं लोकपालम् असृजत् इति दर्शयति - '**नासिके** इति । **नासिके निरभिद्येयाताम्** । नासिकाकारविवरविशिष्टः स पिण्डः परमात्मसङ्कल्पवशात् अभूत् । **नासिकाभ्यां** - घ्राणाख्यम् इन्द्रियमजायत । घ्राणात् घ्राणेन्द्रियात् **वायुः** घ्राणेन्द्रियस्य अधिष्ठाता देवः लोकपालविशेषोऽजायत । एवं सर्वत्र इन्द्रियस्यान्नम् इन्द्रियं तदधिष्ठातृ-देवश्चेति क्रमेण त्रितयं निर्भिन्नम् अभवत् । आदित्यात्मकस्य लोकपालस्य सृष्टिं ततः कृतवान् इति वदति - **अक्षिणी** इति । **अक्षिणी निरभिद्येयाताम्** - अक्ष्याकारविवरविशिष्टः पिण्डोऽभवत् । अक्षि - चक्षुरिन्द्रियस्थानभूतं गोलकम् उच्यते चक्षुःशब्देन चक्षुरिन्द्रियमुच्यते दर्शनसाधनीभूतम्। **अक्षिभ्यां चक्षुः** -चक्षुरिन्द्रियाधिष्ठानभूताभ्यां गोलकाभ्यां चाक्षुषप्रत्यक्षकरणम् इन्द्रियं चक्षुरजायत । **चक्षुषः** - इन्द्रियात् तदधिष्ठाता देवो लोकपालविशेषः **आदित्यः** - सूर्यापरपर्यायः समुत्पन्नः । **कर्णौ निरभिद्येयाताम्** । कर्णाकारविवरद्वयमस्य पिण्डस्य अभूत् । कर्णौ च अत्र श्रोत्रेन्द्रियस्थानभूतगोलकद्वयात्मकौ । **कर्णाभ्यां श्रोत्रं** - श्रोत्रेन्द्रियम् उत्पन्नम् । **श्रोत्राद्दिशः** श्रोत्रेन्द्रियात् दिगभिमानी देवविशेषो लोकपालत्वेन संमत उत्पन्नः ।

**त्वङ्निरभिद्यत** - त्वग्गोलकमुत्पन्नम् । **त्वचः** - त्वग्गोलकात् **लोमानि** - लोमसहचरितं स्पर्शनेन्द्रियं, यतः शीतोष्णादिस्पर्शविज्ञानं सम्पद्यते तदुत्पन्नम् । लोमभ्यः - लोमसहचरितत्वगिन्द्रियतः **ओषधिववस्पतयः** - ओषधिवनस्पत्यभिमानी देवविशेषः स्पर्शनेन्द्रियस्य अधिष्ठाता लोकपालविशेषतया संमतः समुत्पन्नः ।

**हृदयं निरभिद्यत** - परमात्मसङ्कल्पत एव हृदयम् अन्तःकरणस्य अधिष्ठानभूतं हृत्कमलमुत्पन्नम् । **हृदयान्मनः** - हृत्कमलात् **मनः** अन्तःकरणमुत्पन्नम् । **मनसः** - अन्तःकरणात् हृत्कमलस्थात् **चन्द्रमा** - मनोधिष्ठाता देवो लोकपालविशेषः समजायत । **नाभिः निरभिद्यत** - नाभिरिह गुदमूलं तस्यैव सर्वप्राणबन्धनस्थानत्वात् । ततः, **अपानः** - अपानवायुसहचरितमिन्द्रियं पायुरिति । ततः तदधिष्ठातृदेवविशेषः मृत्युः लोकपालः प्राभवत् । **शिश्नः** - उपस्थेन्द्रियस्थानम् । ततः, **रेतः** - रेतस्सहचरितम् इन्द्रियम् उपस्थाख्यं उच्यते । तदेव प्रजननेन्द्रियम् । तस्मात् **आपः** - अबभिमानिदेवविशेषः समभवत् । एवं करणस्थानानि करणानि तदभिमानिनः देवविशेषाः-लोकपालाश्च समुत्पादिताः परमात्मना सङ्कल्पविशेषवशात् ॥ १ ॥

## इति प्रथमखण्ड आनन्दभाष्यम्

**सु.** - अथ स परमात्मा **तं** - पुरुषं **अभ्यतपत्** - सङ्कल्पोष्मणा, सङ्कल्पविशेषगोचरम् अकरोत् , अयं लोकपालादिनिर्माणद्वारकारणं भवतु इति सङ्कल्पमकरोदित्याशयः । **तस्याभितप्तस्य** - सङ्कल्पगोचरीकृतस्य **मुखं निरभिद्यत** - **यथाण्डम्** - पक्षिणः निस्सरतः

निःसरणावकाशमापादयत् यथाण्डं विदीर्यते तथा निरभिद्यत। संवृतं मुखं विवृतमभूदिति यावत्। तस्मात् , **मुखात् वाक्** - भविष्यत्प्राण्युपकरणभावम् आपत्स्यमानं वागाख्यकरणं (जातावेकवचनम्) प्राभवत् न मुखं वाचः प्रकृतिः, अहङ्कारस्य हि विकृतिः सा, किन्तु निःसरतो वाग्जातस्य निःसरणावधिः गङ्गाया इव हिमवान् । अतः मुखादिति पंचम्युपपत्तिः । **वाचोऽग्निः वाचः** - प्रभवस्थानात् **अग्निः** - लोकपालः प्राभवत् । वाचः ल्यब्लोपे पंचमी वा, वाचमधिष्ठायाग्निः मुखात्प्राभवत् इति तदर्थः । **नासिके निरभिद्येताम्** । पूर्ववत् । निःसरिष्यमाणनिःसरणोपयुक्तावकाशविशिष्टम् अभूत् इत्याशयः । **नासिकाभ्यां प्राणः** - प्राण इति घ्राणः लक्ष्यते, **प्राणाद्वायुः** - पूर्ववत्। वायुः देवविशेषः। **अक्षिणी** इत्यादि व्यक्तम्। **दिश** इति दिगभिमानी देवताविशेषः लक्ष्यते । **लोमानि** इति । साहचर्यात् स्पर्शनेन्द्रियमुपचर्यते ।**ओषधिवनस्पतयः** - इति । तदभिमानी देवताविशेषः, लोम्नामपि अयमेव अभिमानी देवः । **हृदयमिति**। हृदयकमलमित्येतत्। **मृत्युः** - यमः। **रेतः** - इति रेतःसहचरितं प्रजननेन्द्रियं लक्ष्यते। **आपः** - इति तदभिमानी देवताविशेषः। एवं सकरणा लोकाः प्रादुरभवन्। इति लोकपाल सृष्टिरुक्ता।

**इति प्रथमखण्ड सुबोधिनी**

* * *

## द्वितीयः खण्डः

[अशनायापिपासयोः सृष्टिः]

**ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतन् । तमशनाया[1]पिपासाभ्यामन्ववार्जयत् । ता एनमब्रुवन् । आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥**

**प्र.दी.** - आत्मना नारायणेन **ताः** - पूर्वोक्ताः **एताः** - अग्न्यादयःवागिन्द्रियादिदेवताः लोकपालत्वेन सङ्कल्प्य **सृष्टाः**, **अस्मिन् संसारार्णवे महति** अविद्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहे अनादावनन्ते अपारे विषयेन्द्रियजनितसुखलवक्षणविश्रामे-पंचेन्द्रियार्थतृष्णामारुतविक्षोभोत्थितानर्थशतमहोर्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिता-क्रोशनोद्भूतमहारवे-सत्यार्जवदानदयाहिंसादमशमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपे-सत्सङ्ग-द्वारा सर्वविषयत्यागमार्गे मोक्षस्य तीरभूते एतस्मिन्महति संसारार्णवे **प्रापतन्** - पतितवन्तः । **तं** - स्थानकरणदेवतोत्पत्तिभीजभूतं पुरुषं प्रथमोत्पादितसमष्टिजीवं **अशनायापिपासाभ्यामन्ववार्जत्** - अनुगमितवान् , संयोजितवानित्यर्थः । कारणभूतस्य तस्य अशनायादिदोषवत्वात्कार्य-भूतानामपि देवतानां अशनायादिमत्वमभूत् । ताः देवताः अशनायापिपासाभ्यां पीड्यमा-नास्सत्यः । एनं पितामहं सर्वस्रष्टारं श्रीमन्नारायणम् **अब्रुवन्** - विज्ञापनमकुर्वन् । किमिति ; **आयतनं नः प्रजानीहीति** - नः अस्मभ्यं आयतनं अधिष्ठानं प्रजानीहि । शरीरं देहीत्यर्थः । वयमस्मिन्शरीरे **प्रतिष्ठितास्सन्तः अन्नमदाम** - भक्षयामः ।

**प्र. - ता एता देवतास्सृष्टा अस्मिन् महत्यर्णवे प्रापतन्** । एता अग्न्यादयः देवताः लोकपालत्वेन सङ्कल्प्य **सृष्टाः** अस्मिन् महति संसारार्णवे रागद्वेषादिमहाग्राहग्रस्ते (स्ताः?) पतिता अभूवन् । **तमशनायापिपासाभ्यामन्ववार्जत्** । प्रथमोत्पादितं पिण्डं अशनायापिपासाभ्यां संयोजितवान् । तस्य कारणभूतस्य अशनायादिदूषितत्वेन तत्कार्यतया सृष्टा अपि देवताः अशनायादिदूषिता अभूवन् इति । **ता एनमब्रुवन् अन्नमदामेति । ताः** - देवताः अशनायापिसाभ्यां पीड्यमाना **एनं - पितामहमागत्य,** *अस्मभ्यम् अधिष्ठानं विधत्स्व । तत्र प्रतिष्ठिता अन्नं भक्षयित्वा अशनायां निवर्तयिष्यामः* इति ।

**आ.भा. - ताः** लोकपालान् सृजानीति सङ्कल्पगोचरा **एता** - अग्निवायुप्रभृतयः **सृष्टाः** - उक्तक्रमेण विरचिता **देवताः** - देवाः । लोकपाला इत्येतत् । **अस्मिन्** -

---

1. **अशनाया** - क्यजन्तशब्दोऽयं, 'अशनायोदन्याधनाया बुभुक्षापिपासागर्धेषु ' (पा.सू. ७-४-३४) इति सूत्रेण बुभुक्षार्थे निपातितः । इह यः सद्य एव भोक्तुमशनम् इच्छति इत्यस्य उदाहरणमिति तत्त्वबोधिन्यामुक्तम् । तस्मादेव सृष्ट्यनन्तरमेव अशनाया भगवन्तं प्रति 'आवाभ्यां प्रजानीहि' इत्युक्तवती । **पिपासा** - 'पा-पाने' इति धातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (पा.सू. ३-१-८) इति सूत्रेण सन् 'अप्रत्ययात्' इति सूत्रेण अकारः तदनन्तरं टाप् ।

रागद्वेषकामक्रोधादिकलुषिते संसाररूपे महासमुद्रे **प्रापतन्** - पतिताः । परमात्मज्ञानवैधुर्यात् देहादिष्वेव आत्मभ्रमशक्तितया च एषां संसारपातिताः जाता इत्येतत् । स परमात्मा **तं** - पिण्डं प्रथमतः समुत्पादितं हिरण्यगर्भम् इत्येतत् । अशनाया बुभुक्षा पिपासा जलादिपानेच्छा ताभ्यां **अन्ववार्जत्** - संयोजितवान् अशनायापिपासायुक्तं चकारेति । स्वकारणभूतस्य प्रथमोत्पन्नपिण्डस्य अशनायापिपासायोगे जाते तदुत्पन्नानामग्न्यादीनां लोकपालानामपि ताभ्यां योगस्य जातत्वात् अशनायापिपासा संपीडिता एता देवता अग्न्यादयः लोकपाला एनं स्वकारणीभूतप्रथमपिण्डोत्पादकं पितामहं परमात्मानम् **अब्रुवन्** - अपृच्छन् , **नः** - अस्माकं कृते **आयतनं** - यत्र स्थित्वा भोगं करिष्यामः तादृशं स्थानं **प्रजानीहि** - चिन्तय । कुरुष्व इत्यर्थः । यत्र आयतने **प्रतिष्ठिता** - स्थितिं लभमाना वर्तमानाः सत्यः वयं **अन्नं** - बुभुक्षानिवर्तनक्षमम् अदनीयमोदनायादिकम् **अद्याम**ः - भक्षयाम इति ।

**सु. - ता एता** - अग्न्यादयः लोकपालाः सकरणाः सृष्टाः **अस्मिन् महत्यर्णवे** दुर्निर्गमे भवमहार्णवे स्वाविर्भावस्थानभूतपुरुषोपलक्षिते न्यपतन् । अर्णवे निपतितस्येव भव एव परिभ्रमणम् एषाम् । **तं** - पुरुषं - **अशनायापिपासाभ्यामन्ववार्जत्** - संयोजितवान् **ताः** - एता अग्न्याद्या अपि ताभ्यां पीड्यमानाः **एनं** - परमेश्वरम् **अब्रुवन् , नः आयतनं प्रजानीहि** - सम्पादय इत्येतत् । **यस्मिन् प्रतिष्ठिता** - वयं **अन्नमदामेति** ।

[पुरुषसृष्टिः]

**ताभ्यो गामानयत् ता अब्रुवन् न वै नोऽयमलमिति । ताभ्योऽश्वमानयत् ता अब्रुवन् न वै नोऽयमलमिति । २ ॥**

**ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति । पुरुषो वाव सुकृतम् । ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥**

**प्र.दी - ताभ्यः - देवताभ्यः एवमुक्तो नारायणः परमात्मा गां** - गवाकृतिविशिष्टपिण्डं ताभ्य एव अद्भ्यःपूर्ववत्पिण्डं समुद्धृत्य अमूर्च्छयत्**अनयत्** - दर्शितवान् **ताः** पुनः गवाकृतिं दृष्ट्वा **अब्रुवन् न वै नोऽयमलमिति** - अयं गौ नः अस्मदर्थं अन्नमत्तुं नालम् असमर्थः, न योग्य इत्यर्थः । गवि प्रत्याख्याते उभयतोदन्तं[1] **अश्वमानयत् ता अब्रुवन् न वै नोयमलमिति** । पूर्ववदर्थः ।

**ताभ्यः पुरुषमानयत्** इति । सर्वप्रत्याख्याने **ताभ्यः** - देवताभ्यः **पुरुषमानयत्** स्वयोनिभूतं विराट्पुरुषं दृष्ट्वा **ताः** - देवताः, **सुकृतं बतेति** - शोभनमिदमधिष्ठानं बतेति **अब्रुवन्** तस्मात् **पुरुषो वाव** - पुरुष एव **सुकृतं** - सर्वपुण्यकर्महेतुत्वात् सुकृतमित्युच्यते । **ताः** - देवताः उद्दिश्य आत्मा

---

1. तथा च पुरुषसूक्तं - 'तस्मादश्वा अजायन्त ये के चोभयादतः' । इति । अधरोत्तरभागयोरुभयोर्दन्ताः येषां ते अश्वादयः । गवाद्यपेक्षया अश्वानाम् अत्यधिकशक्तियुक्तत्वात् गवाद्यनन्तरं अश्वानां सृष्टिः परिगणिता । अत एव लोके शक्तेः गणना अश्वशब्देनैव क्रियते ।

नारायणः **अब्रवीत् यथायतनं प्रविशतेति** । यस्य यद्यजनादिक्रियायोग्यमायतनं तत्प्रविशतेति । तथास्तु इत्यनुज्ञां प्रतिलभ्य नगर्यां राज्ञानुज्ञाताः बलाधिपा इव परमात्मना अनुज्ञाता यथायोग्यं स्थानं प्रविशन् इत्यन्वयः ।

**प्र. - ताभ्यो गामानयत्** । गवाकृतिविशिष्टं पिण्डमानीय अधिष्ठानत्वेन प्रदर्शितवान् इत्यर्थः । **ता अब्रुवन् न वै नोऽयमलमिति** । **ताः** - देवताः **अयं** - पिण्डः अस्माकं न पर्याप्तः इत्युक्तवत्यः । **ताभ्योऽश्वमानयत् ता अब्रुवन्न वै नोऽयमलमिति** । तिर्यक्षु गवाश्वादिषु इन्द्रियतदधिष्ठातृदेवतानां सम्यक् कार्यकरत्वाभावात् इति भावः ।

**ताभ्यः - सुकृतं बतेति** । स्वयोनिभूतपुरुषं दृष्ट्वा **सुकृतं**[1] - आत्मने शोभनमिदमधिष्ठानं कृतमिति देवताः **अब्रुवन्** - इत्यर्थः, **पुरुषो वाव सुकृतम्** । सर्वपुण्यकर्महेतुत्वात् पुरुषस्य सुकृतत्वम् उपपद्यत इति भावः । **ता अब्रवीद्यथायतनं प्रविशतेति** । ईश्वर इति शेषः ।

**आ.भा.** - एवं देवताभिरुक्तः परमात्मा **ताभ्यः** - अग्न्यादिदेवताभ्यः **गां** - गवाकृतिं पिण्डविशेषं पंचीकृतभूतभागविशेषं पूर्ववत् उद्धृत्य संमूर्च्छ्य च **आनयत्** - प्रदर्शितवानिदं वः स्थानमानीतम् अन्नादनार्थम् इत्यभिप्रायेण । **ताः** - देवताः **अब्रुवन्** - परमात्मानम् अवदन् । किमित्यत्राह - **न नोऽयमलमिति** । **नः** - अस्माकं अन्नादनोपयुक्तः **अयं** - पिण्डः नास्ति गोरुपरि भागे दन्ताभावेन अधोदन्तमात्रेण अन्नादनं सम्यक् कर्तुं न सम्भवति तस्मान्नायं पिण्डः अलं समर्थः । समुपयुक्त इत्येतत् । एवं देवताभिरुक्तः परमेश्वरः **ताभ्यः** - देवताभ्यः **अश्वं** - अश्वाकृतिं पिण्डविशेषं पूर्ववन्निर्माय **आनयत्** - प्रदर्शितवान् । अश्वाकृतिं पिण्डं दृष्ट्वा तस्याप्ययोग्यतां निश्चित्य **अब्रुवन्** - परमात्मानं प्रति । किमित्याह - **न वा इति** । **नः** - अस्माकं कृते **अयं - पिण्डः** न अलं - न समर्थः । उभयतो दन्तवत्वेपि विवेकविशेषरहितत्वेन अश्वाकृतिः पिण्डोऽपि न अन्नादनसमुपयुक्त इत्येतत् । एवं प्रोक्तः परमेश्वरः **ताभ्यः** - देवताभ्यः **पुरुषं** - पुरुषाकृतिं पिण्डविशेषं पूर्ववत् पंचीकृतपंचभूतेभ्य एव स्वसङ्कल्पतो निर्माय संमूर्च्छ्य च **आनयत्** - प्रदर्शितवान् अयं मनुष्याकृतिः पिण्डः वा अन्नादनसमर्थो भवेत् इत्याशयेन । तं पिण्डमुभयतो दन्ततया विवेकविशेषवत्तया च अन्नभक्षणे समुपयुक्तं पर्यालोच्य **ताः** - देवताः परमात्मनम् **अब्रुवन्** - कथयामासुः । किमित्यत्राह - **सुकृतं बतेति** । बत इत्यव्ययं हर्षवाचकम् । सुकृतं सुष्ठुकृतं शोभनमिदं पिण्डरूपं स्थानं कृतम् । सौष्ठवंचास्य पिण्डस्य स्वजनकप्रथमपिण्डसमानाकारतया, विवेकविशेषवत्तया उभयतोदन्तत्वेन अन्नभक्षणाय विशेषेणोपयुक्ततया च बोद्धव्यः । हर्षहेतुः

---

1. सम्यक् कृतमधिष्ठानं सुकृतम् । ततः परमेश्वरः तदर्थं विवेकसम्पन्नं पुरुषदेहमानयत् । ताश्च देवता परितुष्टा आश्चर्यवाचकेन बत शब्देन स्वकीयं परितोषं सूचयन्त्यः सुष्ठु कृतं परमेश्वरेण इत्यब्रुवन् । यस्मात् मनुष्यदेह एव विवेकज्ञानसम्पन्नः । तथा च पूर्वमुदाहृतम् - 'पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेदलोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नः (ऐ.आ. २-३-२) इति । तस्मान्मनुष्यदेह एव सुकृतमित्यनेन शब्देन परितोषद्योतकेन वक्तुं योग्यः । (सायणभाष्यम्)

ईदृशपिण्डलाभ एव । **पुरुषो वाव सुकृतम्** । **पुरुषः** - पुरुषाकारः पिण्ड एव **सुकृतं** - सुकृतसाधनत्वात् । सुकृतत्वं पिण्डस्योक्तं भवति सुकृतंच पुण्यकर्म । एवमुक्तः परमेश्वरः तासामिष्ट एष पिण्ड इति प्रतीत्य **ताः** - देवताः **अब्रवीत्** - उक्तवान् - **यथायतनं प्रविशतेति** । आयतनमुत्पत्तिस्थानं तदनतिक्रम्य **यथायतनं** यथास्थानमत्र पिण्डे प्रवेशं कुरुत इति । यस्या देवताया यतः स्थानात् गोलकरूपात् सकारणा या उत्पत्तिः सा देवता तदेव स्थानमाश्रयतु, अस्मिन् पिण्डे अन्नभक्षणाय तत्र स्थित्वा च अन्नादनपूर्वकमशनायाप्रशमं पिपासानिरासंच करोतु । गवाश्वसृष्टिः सकलतिर्यग्जातिसृष्ट्युपलक्षिका । अनेन [1]व्यष्टिसृष्टिः प्रदर्शिता, प्रथमपिण्डसृष्टिस्तु [2]समष्टिसृष्टिरिति विवेकः ।

**सु.** - अथ ताभिस्तथोक्तः परमेश्वरः **ताभ्यः** - देवताभ्यः **गां** - गवाकृतिं पिण्डविशेषं निर्माय पुरतः समानयत् । तं दृष्ट्वा **ता अब्रुवन् , न वै नोऽयमलमिति** - अयं पिण्डविशेषः नास्माकं भोगाय पर्याप्त इति । अरुचिं आसां विज्ञाय तत उभयतोदन्तत्वेन प्रकृष्टं **अश्वमानयत्** , विवेकशक्तिवैधुर्यमालक्ष्य तस्मिन् **अब्रुवन् न वै नोऽयमलमिति** । गवाश्वसृष्टिरियं तिर्यङ्मात्रसृष्टेरुपलक्षिका । अथ स **ताभ्यः पुरुषमानयत्** , - पुरुषाकृतिं तं पिण्डविशेषमवलोक्य **ताः** - प्रहृष्टाः **अब्रुवन् - सुकृतं बतेति** । बतेति हर्षे । **सुकृतम्** - शोभनं कृतम् । तिर्यक्सृष्ट्यपेक्षया पुरुषसृष्टेः प्रकृष्टतया अग्न्यादिभिः अभिमतत्वेन अद्यापि पुरुष एव पुरुषयोनिरेव **सुकृतम्** - सुकृतसाधनं भवति । अथ स **ता अब्रवीत्यथायतनम्** - यथास्थानमिह प्रविशतेति ॥

[अधिदेवतानां आयतनप्रवेशः]

**अग्निर्वाग्भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् । दिशश्श्रोत्रं भूत्वा कर्णौ प्राविशन् । ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन् । [3]चन्द्रमा मनो भूत्वा हृदयं प्राविशत् । मृत्युरपानो भूत्वा नाभिं प्राविशत् । आपो रेतो भूत्वा शिश्नं प्राविशत् ॥ ४ ॥**

**प्र.दी. - अग्निरित्यादि** - स्पष्टोऽर्थः ।

**प्र.** - [4]**अग्निर्वाग्भूत्वा मुखं प्राविशत्** । वागभिमानी अग्निः वागेव भूत्वा - वाग्रूपो भूत्वा स्वयोनिं **मुखं प्राविशत्** । एवमुत्तरत्रापि । **वायुः - प्राविशन्** । पूर्ववदर्थः ।

---

1. **व्यष्टिसृष्टिः** - अण्डोत्पत्तेरुत्तरं सृष्टिः । 2. **समष्टिसृष्टिः** - अण्डोत्पादनादि पूर्वसृष्टिः ।
3. तथा च श्रुत्यन्तरं - 'चण्द्रमा मनसो जातः' इति पु.सू. १४ । 4. न खलु वागादिषु इन्द्रियेषु अग्न्यादिदेवताः प्रत्यक्षमुपलभ्यन्ते । नापि देवताभिप्रेरिताणामिन्द्रियाणां स्वस्वविषयग्रहणसामर्थ्यमस्ति । एतच्च भगवता व्यासेन सूत्रितम् 'ज्योतिराद्यधिष्ठानं तु तदामननात्' (ब्र.सू. २-४-१४) इति ज्योतिरादिभिः अग्न्यादिदेवतैरधिष्ठानं वागादीन्द्रियाणां प्रेरणमभ्युपगन्तव्यम् । कुतः तदामननात् तस्य देवताप्रेरणस्य 'अग्निर्वाग्भूत्वा' इत्यादिना श्रूयमाणत्वात् । यथायं विचारो द्वितीयाध्यायस्य चतुर्थपादे सूत्रितः । इति सायणभाष्यम् ।

**आ.भा.** - एवं यथायतनं प्रविशतेति परमात्मन आदेशं लब्ध्वा **अग्निः** - वागभिमानी देवः **वाग्भूत्वा** - वाक्स्वरूपेण **मुखं प्राविशत्** । मुखमेव अग्नेः योनिः अतस्तदेव अस्य आयतनं तस्मात्तदेवाऽसौ प्रविष्टवान् स्वस्थानानतिक्रमणस्य परमेश्वरादेशान्तर्गतत्वात्। एवं घ्राणाभिमानी देवः **वायुः** - घ्राणो भूत्वा घ्राणेन्द्रियात्मकः सन् **नासिके** - स्वयोनिभूते स्थाने **प्राविशत्** - तत्र प्रवेशमकार्षीत् । **आदित्यश्चक्षुः** - चक्षुरिन्द्रियाधिष्ठाता देवः चक्षुरात्मकः सन् **अक्षिणी** - स्वयोनिभूते गोलोके **प्राविशत्** - तत्र स्थितिं चकार। **दिशः** - श्रोत्राभिमानी देव इत्येतत्। **श्रोत्रं भूत्वा** - श्रोत्रेन्द्रियात्मकः सन् **कर्णौ**, -श्रोत्रेन्द्रियस्थानमित्येतत्। **प्राविशत्**। कर्णौ हि मूलमादित्यस्यापि तत एव श्रोत्रेन्द्रियद्वारा आदित्यस्य समुद्भवात्। **ओषधिवनस्पतयः** - एतदभिमानी देव इत्येतत् । **लोमानि भूत्वा** - लोमसहचरितत्वगिन्द्रियस्वरूपेण **त्वचं** - **त्वग्गोलोकं** स्वयोनिभूतं प्राविशन्। **चन्द्रमा** - देवो योऽन्तःकरणाभिमानी स **मनो भूत्वा** - अन्तःकरणात्मना **हृदयं** - हृत्कमलं स्वयोनिं **प्राविशत्। मृत्युः** - यमो देवः पाय्वभिमानी **अपानो भूत्वा** - अपानसहचरितपाय्विन्द्रियरूपेण **नाभिः** - गुदमूलं सर्वप्राणिबन्धनं स्वयोनिभूतं स्थानं प्राविशत् । आपो - अबभिमानी देवविशेष इत्येतत् **रेतोभूत्वा** - रेतःसहचरितोपस्थेन्द्रियात्मकः सन् **शिश्नं** - प्रजननेन्द्रियस्थानं स्वयोनिभूतं **प्राविशन्** - प्रविष्टा अभवन्।

**सु.** - अथ ईश्वरेणाभ्यनुज्ञाता अग्न्यादयः यथास्थानं प्राविशन् , तत्र, **अग्निर्वाग्भूत्वा** - वागभिमानिनी भूत्वा वाचमधिष्ठाय तद्रूपा सती **मुखम्** - स्वप्रभवसजातीयं स्थानं प्राविशत् । वाय्वादयोऽप्येवमेव घ्राणाद्यधिष्ठायतत्तद्रूपाः नासिकादिस्थानं प्राविशन् ॥

**तमशनायापिपासे अब्रूताम्। आवाभ्यां अभिप्रजानीहि इति। स ते अब्रवीत्, एतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमि इति। तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते, भागिन्यावेवास्यामशनायापिपासे भवतः ॥ ५ ॥**

**इति द्वितीयः खण्डः**

**प्र.दी.** - **तम्** इति। एवं लब्धाधिष्ठानासु सतीषु देवतासु निरधिष्ठाने सति **अशनायापिपासे** द्वे **तम्** - आत्मानं नारायणम् **अब्रूताम्** - उक्तवत्यौ **आवाभ्यां** ,अधिष्ठानं **अभिप्रजानीहि** - चिन्तय विधत्स्व इत्यर्थः । **सः** - परमात्मा नारायणः एवमुक्तः, अशनायापिपासे उद्दिश्य **अब्रवीत्** , युवयोर्धर्मरूपत्वात् अधर्मिणोर्युवयोः नानात्वं सम्भवति । तस्मात् **एतास्वेव** - अग्न्यादिदेवतासु अधिदेवतासु **वां** - युवां **आभजामि** - वृत्तिसंविभागेन अनुगृह्णामि । **एतासु**, युवां **भागिन्यौ** - भागवत्यौ वां **करोमीति**, सृष्ट्यादौ नारायणः परमात्मा एवं व्यदधात्। यस्मात् **तस्मात्** इदानीमपि

**यस्यै कस्यै च देवतायै** - अर्थाय हविर्गृह्यते - चरुपुरोडाशादिलक्षणं तस्मिन् **भागिन्यावेव** भागवत्यावेव युवां **स्याताम्** - अशनायापिपासे भागवत्यौ **भवतः** ।

**इति द्वितीयखण्डप्रतिपदार्थदीपिका**

**प्र. - तमशनायापिपासे अब्रूताम् , आवाभ्यामभिप्रजानीहीति** । एवं लब्धाधिष्ठानासु देवतासु **तं** - ईश्वरं **अशनायापिपासे** - आवाभ्याम् अधिष्ठानं विधत्स्व इति **अब्रूताम्** । **स ते अब्रवीत्** - **भागिन्यौ करोमीति** । एतास्वेव देवतासु - वृत्तिसंविभागेन युवानम् अनुगृह्णामि ; **एतास्वेव देवतासु** युवां भागवत्यौ करोमि इति ईश्वरः अशनायापिपासे प्रति अब्रवीदित्यर्थः । **तस्माद्यस्यै कस्यै च - भवतः** । अशनायापिपासाविशिष्टाया भवता एव देवतायागविभागत्वात् (अशनायापिपासाविशिष्टाया एव देवताया भागवत्वात् ?) तयोरपि भागवत्वमस्तीति भावः । ततश्च इन्द्रादीनामपि अशनायादूषितत्वात् तत्पदेभ्योऽपि विरज्येतेति भावः ।

**इति द्वितीयखण्डप्रकाशिका**

**आ.भा.** - एवम् अग्न्यादिदेवतासु लब्धायतनासु आयतनरहिते **अशनायापिपासे तं** - अग्निप्रभृतिदेवताभ्यः अधिष्ठानदातारम् ईश्वरं **अब्रूतां** - कथितवत्यौ । किमित्याकांक्षायामाह — **आवाभ्यामिति** । **आवाभ्यां** - अशनायापिपासाभ्यां **अभिप्रजानीहि** विचिन्तय । स्थानमिति शेषः । यत्र स्थाने स्थिते भूत्वा आवामपि देवतावदन्नमदाव इत्येतादृशं स्थानं कुरुष्व इत्येतत् । एवं ताभ्यां प्रार्थितः सः परमेश्वरः **ते** - अशनायापिपासे प्रति **अब्रवीत्** - उक्तवान् । किमुक्तवा-नित्याह -**एतास्विति** । **एतासु** - अग्न्यादिषु **देवतास्वेव वां** - अशनायापिपासे **आभजामि** - वृत्तिं प्रविभज्य अनुगृह्णामि । अनुग्रहप्रकारमेव दर्शयति, **भागिन्यौ करोमीति** । एतासु देवतास्वेव भागिन्यौ भागवत्यौ करोमि इति । यस्या देवताया यो भागो यागादिषु हविरादिस्वरूपः तस्या देवतायाः तस्मिन्नेव भागे युवयोरपि भागः स्यादिति कल्पयामीत्यर्थः ।

ईश्वरेण सर्गकाले एव अशनायापिपासयोः कृते देवताभागेष्वेव भागः कल्पितः तस्मात् अद्यत्वेऽपि **यस्यै कस्यै च देवतायै** - यस्याः कस्याश्चित् देवतायाः कृते **हविः** - हविरादिलक्षणो भागो **गृह्यते** - उपह्रियते । दीयत इत्येतत् । याज्ञिकैः अस्यां - देवतायां **भागिन्यौ एव अशनायापिपासे भवतः** - तद्देवताभागेनैव भागवत्यौ इमेऽपि भवतः । अशनायापिपासायुक्ताया एव देवताया भागग्राहित्वात् अनयोरपि भागवत्वं तद्भागत एव सम्पद्यते । अशनायापिपासयोः क्रियारूपत्वात् इच्छारूपत्वाद्वा अचेतनया चेतनवस्तुसम्पर्कमन्तरेण स्वयमन्नादनसामर्थ्याभावात् स्वातन्त्र्येण परमेश्वरेण आभ्यां देवतावत् भागो न कल्पितः किन्तु देवताभागेन भागवत्ता कल्पिता इति ध्येयम् ॥

**इति द्वितीयखण्ड आनन्दभाष्यम्**

**सु.** - अथ एनम् **ईश्वरम् अशनयापिपासे अब्रूताम्** आयतनम् **आवाभ्यामभिप्रजानीहि** - विचिन्तय, सम्पादय इत्येतत्। एवमभ्यर्थित ईश्वरः प्राह - **एतास्वेव** अग्न्यादि देवतासु युवाम् **आभजामि** - पृथग्युवयोः आयतनं न घटते, क्रियारूपयोः युवयोः नहि पृथगुपभोक्तृता सम्भवेत्, तत्तद्देवतासु **आभजामि** - अवकाशप्रदानेन अनुगृह्णामि। एतासु युवां **भागिन्यौ** - एताभ्यः दीयमानहविरादिभागिन्यौ करोमि इति । तस्मादेव ह्येताः **यस्यै कस्यै चिद्देवतायै** अर्पयितुं **हविश्च** - पुरोडाशादिलक्षणं **गृह्यते,** - अस्यां देवतायां तद्धविर्भागिन्यामेते अशनायापिपासे भागिन्यौ भवतः। एतेन व्यष्टिसृष्टिः निरूपिता।

**इति द्वितीयखण्डसुबोधिनी**

* * *

## तृतीयः खण्डः

[अन्नसृष्टिः]

**स ईक्षतेमे नु लोकाश्च लोकपालाश्च ; अन्नमेभ्यः सृजा इति ॥ १ ॥**

**सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्तिरजायत। या वै सा मूर्तिरजायत, अन्नं वै तत् ॥ २ ॥**

**प्र.दी. - स ईक्षतेमे नु लोकाश्च लोकपालाश्चेति। स** - परमात्मा नारायणः **ईक्षत** - ऐक्षत किमिति। **नु** शब्दः तुशब्दार्थकः। **इमे नु लोकाः** - एते लोकास्तु लोकपालाश्च मया **सृष्टाः**, - अशनायापिपासाभ्यां च संयोजिताः। अतो नैषां स्थितिरस्ति अन्नमन्तरेणेति विचार्य तस्मात् **अन्नम्** - एतेभ्यः लोकपालेभ्यः **सृजै इति** - सृजा इति। लोके ईश्वराणां निग्रहानुग्रहौ एवं दृष्टौ। तद्वत्सर्वेश्वरस्य नारायणस्यापि सर्वान्प्रति निग्रहानुग्रहौ स्वातन्त्र्याद्भवतः।

**सोऽपोऽभ्यतपत्** इति। **सः** - परमात्मा नारायणः लोकानां लोकपालानां च अन्नं सिसृक्षुः **अपः** उदकान्युद्दिश्य पंचभूतसंयुक्तानीत्यर्थः, **अभ्यतपत्** - सङ्कल्पं कृतवान्। **ताभ्योऽभितप्ताभ्यो मूर्तिः** - घनरूपः धारणसमर्थः चराचरलक्षणम् अन्नम् **अजायत। या मूर्तिः** - अजायत **सा तत्** - तेषां **अन्नं** भवति। मार्जारादीनां चरं अन्नं मूषकादिः गवादीनामचरं तृणादिकं नारायणेन समुत्पन्नम् ॥

**प्र. - स ईक्षत - सृजा इति।** लोकांश्च लोकपालांश्च सृष्ट्वा एषामशनायाविशिष्टानाम् अन्नं सृजानीति सङ्कल्पम् अकरोत् इत्यर्थः। **सोऽपोऽभ्यतपत्।** अप उद्दिश्याभिधानं कृतवानित्यर्थः। **ताभ्यः— अन्नं वैतत्।** अभिध्यातेभ्यः सः (अभिध्याताभ्यः ताभ्यः) कठिनात्मा अन्नरूपः परिणामः अजायत इत्यर्थः।

**आ.भा. - सः** - परमेश्वरः **ईक्षत** - सङ्कल्पम् अकरोत्। **इमे नु लोका** - अम्भः प्रभृतयः **लोकपालाः** - अग्निप्रभृतयः सृष्टाः। अशनायापिपासाभ्यां योजिताश्च। **एभ्यः** - स्थानान्यपि दत्तानि स्वाभीष्टानि उपभोगयुक्तानि, परन्तु अदनीयस्यैव चेत् अन्नस्य अभावः स्यात् तदा कथमेषां लोकपालानां बुभुक्षापिपासाव्याकुलितानाम् अनवस्थितिः सम्भवेत् तस्मात् एभ्यः लोकपालेभ्यः लोकपालार्थं **अन्नं सृजै** - सृजानि। समुत्पादयेयम् इत्येतत्। एवं सङ्कल्पं स कृतवान् इत्यर्थः। एवं सङ्कल्प्य **सः** - परमात्मा **अपोऽभ्यतपत्** - अप उद्दिश्य अभिध्यातवान्। अप्पदं पंचीकृतभूतोपलक्षणमित्युक्तम्। व्रीहियवादिकमन्नं पंचीकृतेभ्य एभ्यो भूतेभ्यः समुत्पन्नं भवतु इति सङ्कल्पगोचरा अपः कृताः कृतवान् इत्येतत्। **अभितप्ताभ्यः** - व्रीहियवाद्यन्नोत्पादगोचरसङ्कल्पविषयाभ्यः **एताभ्यः** - अद्भ्यः **मूर्तिरजायत** - घनीभूतं शरीरधाणसमर्थं व्रीहयादिकम् अजायत। मूर्तिशब्दार्थं व्याचष्टे श्रुतिरेव - **यावै सेति। यावै मूर्तिः** - चराचररूपा **तदन्नमिति।** घासादिकमचरमूर्तिः बिडालव्याघ्रादिखाद्यभूता मूर्तिः मूषकहरणादिरूपाचरस्वरूपा इति विवेकः।

**सु. - सः** - परमेश्वरः पुनरेवमैक्षत - सङ्कल्पितवान् । किमिति, **इमे,** यथासङ्कल्पं **लोकपालाश्च सृष्टाः** । अथ, **एभ्यः अन्नं सृजै इति** । एवं पर्यालोच्य **सः** - आपः भूतानि, अभ्यतपत् , सङ्कल्पोष्मणा, व्रीहयाद्यन्नमेभ्यः प्रभवतु इति सङ्कल्पम् अकरोत् इति यावत् । अभितप्ताभ्यः ताभ्यः मूर्तमपि घनीभूतम् अजायत । यत्तन्मूर्तं तदेव अन्नं व्रीहयादिलक्षणं मानुषयोग्यम् , मार्जारादियोग्यं मूषकादि च ।

[वागादिभिः अन्नग्रहणासामर्थ्यम् अपानेन अन्नग्रहणं च]

**तदेतदभिसृष्टं सत् पराङत्यजिघांसत् । तद्वाचाऽजिघृक्षत् । तन्नाशक्नोद्वाचा ग्रहीतुम् । स यद्धैनद्वाचाऽग्रहैष्यत् ,अभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥ ३ ॥**

**तत् प्राणेनाजिघृक्षत् । तन्नाशक्नोत् प्राणेन ग्रहीतुम् ॥ स यद्धैनत् प्राणेनाग्रहैष्यत् , अभिप्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥**

**तच्चक्षुषाऽजिघृक्षत् । तन्नाशक्नोच्चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षुषाऽग्रहैष्यत् दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ५ ॥**

**तच्छ्रोत्रेणाजिघृक्षत् । तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् । स यद्धैनच्छ्रोत्रेणाग्रहैष्यत् , श्रुत्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥**

**तत्त्वचाऽजिघृक्षत् ॥ तन्नाशक्नोत्त्वचा ग्रहीतुम् । स यद्धैनत् त्वचाऽग्रहैष्यत् , स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ७ ॥**

**तन्मनसाऽजिघृक्षत् । तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मनसाऽग्रहैष्यत् , ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥**

**तच्छिश्नेनाऽजिघृक्षत् । तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यत् , विसृज्य हैवान्नमत्रप्स्यत् ॥ ९ ॥**

**तदपानेनाजिघृक्षत् । तदावयत् । स एषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ॥ १० ॥**

**प्र.दी. - तदेतदिति । तदेतत्** - अन्नं, लोकपालानां अभिमुखोत्सृष्टं सत् यथा मूषकादिः मार्जारादिगोचरस्सन् अयं मम मृत्युरन्नादः इति मत्वा परागंचतीति पराक् सत् शत्रूनतीत्य **अजिघांसत्** - अतिक्रम्य गन्तुमैच्छत् पलायितुमुपक्रमत इत्यर्थः । **तत्** - अन्नाभिप्रायं मत्वा सः - लोकलोकपालसंघातः समष्टिपुरुषः विराट् प्रथमजत्वात् अपश्यत् **तन्नाजिघृक्षत्** - तदन्नं न गृहीतवान् **नाशक्नोद्वाचाग्रहीतुं** - अदनक्रियया अन्नं ग्रहीतुं उपादातुं न समर्थोभवत् स प्रथमजः

विराट्पुरुषः **यत्** - यदिहैव तदन्नं **वाचाऽग्रहैष्यत्** - गृहीतवान् स्यात् तदा अन्नं सर्वोऽपि लोकः तत्कार्यभूतत्वात् **अन्नमित्यभिव्याहृत्यैव अत्रप्स्यत्** - तृप्तो अभविष्यत् । न चैतदस्ति । अतो **नाशक्नोत्** - **पूर्वजोऽपि वाचा गृहीतं नाशक्नोत् इत्यर्थः** ।

**तत्प्राणेनाजिघृक्षत्** इत्यादि । अय पुरुषः तदन्नं **प्राणेन ग्रहीतुं नाशक्नोत् ग्रहीतुं** - असमर्थोऽभवत् । **सः यद्धैनदिति** । **सः** - समष्टिपुरुषः एतदन्नं **प्राणेनाग्रहैष्यत् अभिप्राण्य** - आघ्राय हैव आघ्रायैव **अन्नमत्रप्स्यत्** - तृप्तो अभविष्यत् । लोके न तथा दृश्यते इति एतेषु सर्वेषु वाक्येषु एवमर्थो वर्णनीयः । **तच्चक्षुषाजिघृक्षत्** इति । अयं विराट्पुरुषः तदन्नं रूपं **चक्षुषाजिघृक्षत्** - ग्रहीतुमैच्छत् । तदन्नं चक्षुषा ग्रहीतुं **नाशक्नोत्** - असमर्थमभवत् । **स यद्धैनत् इति** । **सः** - पुरुषः **यत् ह** - यस्मात्कारणात् **एनत्** - अन्नं **चक्षुषाऽग्रहैष्यत् दृष्ट्वा हैवान्नमिति** । अन्नं दृष्ट्वैव तृप्तो अभविष्यत् । तथा लोके न दृश्यते । **तच्छ्रोत्रेणेति । तत्त्वचा । तन्मनसा । तच्छिश्नेनेति । तदपानेनेति** । तदन्नं [1]**अपानेन** - अपानवायुना मुखच्छिद्रेणान्तर्गच्छता **अजिघृक्षत् तदावयत्** - तदन्नमेवं जग्राह, अशितवान् तेन **स एषः** - अपानवायुः **अन्नस्य ग्रहः** - अन्नग्राहक इत्येतत् । **यद्वायुः** - यो वायुः सः - **अन्नायुः** अन्नबन्धनः, अन्नजीवनः, वै प्रसिद्धः **स एषः** - यो वायुः ॥

**प्र.** - अशनायापिपासानुकूललोकलोकपालानां पुरतः सृष्टमन्नं **पराङ्** भोग्यभूतं - भक्ष्यभूतमिति यावत् - **अत्यजिघांसत्** - अतिक्रम्य गन्तुमैच्छत्, मार्जारादिवक्त्रस्थितमूषिकादिवत् पलायितुमारभत इत्यर्थः । **तद्वाचाजिघृक्षत्** - पलायमानम् अन्नं प्रथमोत्पन्नः लोकलोकपालकार्यकारणसंघातलक्षणः पिण्डः वाग्व्यापारेण अन्नं (?) ग्रहीतुम् ऐच्छत् । **तन्नाशक्नोद्वाचा ग्रहीतुम्**।स्पष्टोऽर्थः।**स यद्धैनद्वाचाऽग्रहैष्यत्, अभिव्याहृत्य हैवान्नमत्रप्स्यत्**।यदि वाग्व्यवहारेणैव अन्नं ग्राह्यं स्यात् अन्नमिति वाचा व्यवहृत्यैव सर्वेऽपि तृप्तिं प्राप्नुयुः इत्यर्थः । अतः वाग्ग्रहणयोग्या (?) न्नाभावा (द्वाचाग्रहीतुं, नाशक्नो?) दित्यर्थः ।

**तत् प्राणेन** - **विसृज्य हैवान्नमत्रप्स्यत्** । पूर्ववदर्थः । **तदपानेनाजिघृक्षत्तदावयत्** । **अपानेनाजिघृक्षत्**। मुखरन्ध्रगतेन वायुना अजिघृक्षत् (आवयत्?) अशितवानित्यर्थः ।**सएषोऽन्नस्य ग्रहो यद्वायुः** ।वायुरेव अन्नग्राहीत्यर्थः । **अन्नायुर्वा एष यद्वायुः** अन्नमेव वायुजीवनं (अन्नमेव आयुः जीवनं?) यस्य सः । अन्नजीवनक इत्यर्थः ।

**आ.भा.** - **तदेतत्** - अन्नं, परमात्मना बुभुक्षाशान्त्यर्थं लोकपालानां कृते सङ्कल्प्य विशेषतः समुत्पादितं सत् इमे लोकपालाः मां भक्षयिष्यन्ति इति मत्वा **पराङ्** - पराङ्मुखं सत् **अति** - लोकपालानतिक्रम्य **अजिघांसत्** - गन्तुमियेष । पलायनं कर्तुमैच्छत् इत्येतत् ।

---

1. अपानेनेति । गलान्तर्गच्छतो वायोरधोगतित्वात् अपानशब्देन अन्नस्य मुखबिलादन्तः प्रवेशरूपं निगरणं कुर्वन् अन्तर्मुखो भूत्वा यो वायुः सोऽभिधीयते । इति सायणभाष्यम् ।

ननु अचेतनं व्रीह्यादि कथं लोकपालानां जिघत्सामवेदीत् कथंच तत्पूर्वकं पलायनं कर्तुमैच्छत्। न व्रीह्यादिमात्रमन्नं सृष्टवान् विभुः, किन्तु मूषकाद्यपि बिडालादिभोग्यं सृष्टवान् तच्च चेतनावत् संपृक्तम्। सम्भवति च तस्मिन् जिघत्सापरिज्ञानं पलायनेच्छा च, तदारोप्य व्रीह्यादिष्वपि व्यवहारः समुपपद्यत एव। आप ऐक्षन्त इत्यादिव्यवहारश्च श्रुतिप्रसिद्धोऽस्त्येव। **तद्वाचेति। तत्** - पलायनपरम् अन्नं लोकलोकपालकार्यकारणसंघातरूपः प्रथमोत्पन्नः पिण्डः हिरण्यगर्भात्मको **वाचा** - वाग्व्यापारेण अजिघृक्षत् - ग्रहीतुं प्रारभत। तदन्नं स प्रथमोत्पन्नः पिण्डो वाग्व्यापारेण **ग्रहीतुम्** - आदातुम् **नाशक्नोत्** - न समर्थोऽभवत्। ननु वाचा अन्नग्रहणप्रयत्न एव अनुपपन्नो न कोऽपि प्राणी निकृष्टतरोऽपि पक्ष्यादिः वाचा ग्रहीतुं यतमानो दृश्यते। प्रथमजश्च पिण्डः समष्टिसर्गः व्यष्टिसर्गापेक्षया अत्यन्तमुत्कृष्टः कथमेवम् अघटमानं कर्तुमघटिष्टेति चेत्। सत्यम्। सर्गाद्यकाल एष उत्पन्नमात्रोऽशिक्षितोऽन्नभक्षणं तदनुभवरहितः प्रथमजोऽपि कथङ्कारम् अद्यतनरीत्यैव ग्रहीतुं प्रवर्तताम् अन्नग्रहणरीतिपरिचयायैव सोऽयोग्ययापि रीत्या प्रयस्यति चरमपर्याये च सा रीतिरनेन परिचिता लोकलोकपालेषु प्रसरन्ती संप्रत्यपि प्रवर्तमाना दृश्यत इति। **सः** - प्रथमजः पिण्डः **एनत्** - अन्नं **वाचा** - वाग्व्यापारेण **अग्रहैष्यत्** - गृहीतवान् स्यात् तर्हि तत्कार्यभूतः सर्वोऽपि प्राणी अन्नम् अभिव्याहृत्य - वाचा अन्नमिदमिति व्यवहृत्य **अत्रप्स्यत्** - तृप्तिम् अगमिष्यत्। न च अन्नमभिव्याहृत्य कश्चित् तृप्तः परिदृश्यते तस्मात् वाचा ग्रहीतुं न प्राभवत् प्रथमः पिण्ड इति भावार्थः। **सः प्राणेन** - घ्राणेन्द्रियव्यापारेण **ग्रहीतुम्** इच्छत् परन्तु **तेन** - ग्रही तुं न प्रभुः बभूव। यदि घ्राणव्यापारेण **स** - गृहीतवान् स्यात् तदा तदुत्पन्नः सर्वोपि प्राणी अन्नम् आघ्रायैव तृप्तिं गच्छेत् न च तथा भवतीति द्वितीयपर्यायार्थः। सः प्रथमजः पिण्डः चक्षुर्व्यापारेण अन्नमादातुं प्रायतत तदापि नादातुं समर्थोऽभवत् यदि **चक्षुषा** स ग्रहीतुं शक्तोऽभविष्यत् तदा तेनैव शिक्षितः समस्तः लोकः अन्नं चक्षुषा दृष्ट्वैव तृप्तः अभविष्यत् नचैवं भवति। ततः श्रोत्रेन्द्रियव्यापारेणापि यत्नं कृतनान् स अन्नग्रहणाय तथापि न समर्थः अभवत्। श्रोत्रव्यापारेण प्रथमजो यदि गृहीतवान् स्यात् अन्नं तदा श्रुत्वैव अन्नमितरोऽपि तृप्यन् दृश्येत न तथा दृश्यते। ततः सः वागिन्द्रियव्यापारेण अन्नं समादातुं प्रयासमाचरत्। सोऽपि प्रयासः अस्य निष्फल एव जातो यदि तथाऽयं सफलः अभविष्यत् तदा अद्यत्वेऽपि स्पृष्ट्वा एव अन्नं तृप्येत्, न च तृप्यति स्पृष्ट्वा अन्नम्।

ततः मनोव्यापारेण मननात्मना आदातुं प्रायतिष्ट न च प्राभवत् आदातुं यदि प्राभविष्यत् आदातुं मननेन, तदा अधुनापि लोकः मननमात्रं कृत्वा एव अन्नस्य तृप्तिमुपेयात्। न च अन्नमननमात्रेण कस्यचित् तृप्तिः दृष्टचरीति भावः। ततः सः शिश्नव्यापारेण परित्यागात्मनाऽपि

ग्रहीतुम् अन्नं प्रायतत न च अयमपि यत्नोऽस्य फलेग्रहिः अभवत् । यदि तथा अभविष्यत् अधुनातनोऽपि लोकः तथैव अन्नमत्तुं प्राभविष्यत् तृप्तः स्यात् न च तथा दृश्यते ।

तदनन्तरम् **अपानेन** - मुखच्छिद्रगतवायुना अधोगमनशीलेन अन्नं **ग्रहीतुं** व्यापारपरः प्रथमजोऽभूत् तदा स तदन्नम् **आवयत्** - अग्रहीष्ट । भक्षितवान् इत्येतत् । इत्थं प्रथस्यता प्रथमजेन चरमे पर्याये समुचिता रीतिः परिचिता अतोऽथत्वेऽपि लोका मुखच्छिद्रगतवायुना एव अपानाख्येन अन्नमदन्ति तृप्ताश्च भवन्ति । एतमर्थं द्रढयितुमेवाह - **स एष इति । यद्वायुः** - योऽयम् अपानाख्यः वायुः मुखरन्ध्रगतः **स एषः अन्नस्य ग्रहः** - ग्राहकः । अपानवायुरेव अन्नस्य आदानकर्ता इत्यर्थः । अत एव अपानवायोः अन्नजीवनकत्वं कथयति योऽयं वायुः अपानाख्यः सः, **अन्नायुः** - अन्नमेव आयुः जीवनं यस्य तादृशः । यदन्नमुपलभ्यते तस्मादेव अपानाख्यः प्राणः तिष्ठति अन्नाभावे तत् स्थितिः न शक्यसम्भवा अतः अपानस्य जीवनसाधनमन्नम् इत्येतत् ।

**सु. - तदेतत्** - अन्नं **सृष्टं** - इमे अत्तारो अस्मान् भक्षयिष्यन्तीति भीत्या **पराग्** भूत्वा **अत्यजिघांसत्** - अतिक्रम्य गन्तुमैच्छत्, पलायितुं प्रावर्तत इत्येतत् । यद्यपि व्रीह्यादेः अन्नस्य सा इयमिच्छा नोपपद्यते । अथापि मूषकादिप्राणिजाते सम्भाव्यमाना व्रीह्यादौ बहिःस्थितिमात्रेण उपचर्यते । स च अत्तृवर्गः प्रथमं जातः अदनप्रकारम् अजानन् अशिशिषा वेगेन तदन्नं वाचा **अजिघृक्षत्** - गृहीत्वा अत्तुम् ऐच्छत्, **नाशक्नोद्वाचा** गृहीत्वात्तुम् । **वाचा यद्यग्रहैष्यत्** इदानीन्तनोऽपि लोको वाचाऽन्नं **व्याहृत्यैवात्रप्स्यत्** । न हि तथा । एवमेव घ्राणादिभिः ग्रहीतुम् अशक्ता अन्ततोऽपानेन प्राणवृत्तिविशेषेण मुखादन्तःप्रसर्पता **अजिघृक्षत्**, **तदावयत्** - जग्राह, गृहीत्वा प्राशीत् इत्येतत् । यो वायुर्मुखबिलादधः प्रसर्पन्नपानाख्यः **स एषोऽन्नस्य ग्रहः** - गृह्यतेऽनेन इति ग्रहः ग्राहकः । प्रसिद्धमेतत् । अत एव एष वायुः, **अन्नायुः** - अन्नेन प्राश्यमानेन जीवनवान्, असत्यन्ने प्राणो हि क्षीयते ।

[आत्मनः शरीरप्रवेशः]

**स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत [1]कतरेण प्रपद्या इति । स ईक्षत यदि वाचाऽभिव्याहृतम्; यदि प्राणेनाऽभिप्राणितम्, यदि चक्षुषा दृष्टम्; यदि श्रोत्रेण श्रुतम्, यदि त्वचा स्पृष्टम्; यदि मनसा ध्यातम्; यद्यपानेनाऽभ्यपानितम्, यदि शिश्नेन विसृष्टम्, अथ कोऽहमिति ॥ ११ ॥**

---

1. प्रवेशद्वारविचारं दर्शयति - द्वावत्र प्रवेशमार्गौ पादाग्रं मूर्ध्निब्रह्मरन्ध्रं च । तयोर्मध्ये कतरेण केन मार्गेण प्रपद्ये प्रविशानि । इति सायण-भाष्यम् ।

**प्र.दी. - स ईक्षत कथं न्विदं मदृते स्यादिति । सः - आत्मा** नारायणः लोकपालसंघात-पुरुषस्थितिं अन्ननिमित्तां कृत्वा पुरपौरतत्पालयितृसमां कृत्वा स्वामी **ईक्षत । कथं** - केन प्रकारेणेति - वितर्कयन् **इदं** - इमं पुरुषं मामन्तरेण पुरस्वामिनं विना कथं मामन्तरेण स्यात्खलु - इत्यन्वयः । **सः** - परमात्मा **ईक्षत** - यो वेदेदं जिघ्राणेति 'स आत्मेति' श्रुत्यन्तरं **यदि वाचाऽभि-व्याहृतं** - इदं यदि वाचा अभिव्याहृतं गौरश्व इत्यादिकं सः - अहमेव **प्राणेनाभिप्राणितं** - इदं यत् सोऽप्यहमेव **चक्षुषा** येन यत् दृष्टं सोऽप्यहमेव **श्रोत्रेण यच्छ्रुतं ; त्वचा** येन यत् **स्पृष्टं** सोप्यहमेव । **यत्मनसा ध्यातं । यत् अपानेन** वायुना **अपानितं । शिश्नेन यत् विसृष्टं** - येन सोप्यहमेव इत्यर्थः । 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छां.उ. ६-३-२) इति श्रुतेः । एतत्सर्वं तत्तत्कर्मानुगुणशरीर प्रविष्टजीवकृतम् । अथ वागाद्यभिव्याप्यतादिज्ञानानन्तरं अथ कोऽहमिति कीदृशस्वरूप इति विचार्यते ॥

**प्र. - स ईक्षत कथं न्विदं मदृते स्यादिति** । एवं लोकलोकपालादीन् सृष्ट्वा लोकलोकपालसंघातस्थितिम् अन्ननिमित्तिकां च कृत्वा, 'लोकपालाद्यधिष्ठितपुरं पुरस्वामिनं मां विना कथं प्रभवेत् । न हि राजानधिष्ठितं पुरं कार्याय प्रभवति इत्येवं अचिन्तयत् । **स ईक्षत यदि वाचाऽभिव्याहृतं - अथकोऽहमिति** । यदि मां विनैव वागादिभिः स्वस्वकार्यं कृतं स्यात् , तदा कस्याहं, मे शेषित्वं (कस्याहं स्वामी ; शेषित्वं मे ?) (कः स्यामहम् ,शेषित्वं मे?) कथं स्यादित्यर्थः ।

**आ.भा. - सः** - परमात्मा लोकलोकपालसर्गं विधाय तज्जीवनोपायं अन्नं च विरच्यापि लोकपालाधिष्ठितमपि इदं कार्यकरणसंघातलक्षणं पुरं **मदृते** - मां विना **कथं स्यात्** - यथा पुरं पौरैरधिष्ठितमपि पुरस्वामिनं विना न चिरं स्थितये अवकल्पते; तथैव नवद्वारम् एतत्पुरमिवास्थितं शरीरं पुरस्वामिनं मामन्तरेण चिराय अवस्थातुं नावकल्पेत, तस्मात् पुरमनुप्रविश्य पुरस्वामी तत्र यथा अवतिष्ठते तथा अहमपि अनुप्रविश्य अत्रअवस्थितः भवामि इत्यावश्यकमन्यथाऽस्य चिरकालीनः स्थेमा नार्हति भवितुम् इति **ईक्षत** - पर्यालोचितवान् । एतेन कार्यकरणसंघातपरि-पालनात्मकं स्वप्रवेशप्रयोजनं प्रदर्शितं भवति ।

एवं स्वप्रवेशप्रयोजनमेकं पर्यालोच्य वक्ष्यमाणं प्रयोजनान्तरमुपेक्ष्य पूर्वं प्रवेशमार्गं चिन्त-यति - **स ईक्षत** इति । **सः** - परमात्मा परिपालनं कार्यकारणसंघातस्य **मदृते** न सम्भवतीति पर्यालोचनानन्तरम् **ईक्षत** - चिन्तितवान् । किमित्याकाङ्क्षायामाह - **कतरेणेति** । किंशब्दात् डतरच् प्रत्ययः द्वयोः सन्दिग्धयोः मध्ये एकस्य निर्णये कार्ये अनुशिष्टः तस्मादिह द्वौ मार्गौ चिन्तनीयौ । तौ द्वौ पादाग्रं ब्रह्मरन्ध्रंचेति । अनयोः पादाग्रब्रह्मरन्ध्रयोः केन मार्गेण प्रवेष्टव्यमिति विचारितवान् । यद्वा 'नव वै पुरुषे प्राणाः सप्त वै शीर्षण्याः प्राणा द्वावांचौ' इत्यादिश्रुत्या 'नवद्वारे

पुरेदेहि' (५-१३) इति भगवद्गीतोक्तेश्चास्य कार्यकारणसंघातरूपस्य कलेवरस्य नवद्वारतया तेषु केन द्वारेण प्रवेष्टव्यमिति चिन्तितवान्। अन्नपक्षे कतरेण इत्यत्र छान्दसो डतरच् लोके डतमच् एव बहूना-मेकस्य निर्धारणे अनुशासनात्। एवं प्रवेशद्वारं परिचिन्त्य द्वितीयं प्रवेशप्रयोजनं चिन्तयतीति श्रुतिराह - **स** इत्यादिना। **सः** - परमात्मा मार्गचिन्तानन्तरम् **ईक्षत** - पर्यालोचयत्। किमित्यत्राह- **यदी**त्यादि। **वाचाऽभिव्याहृतम्।** मां विना केवलया **वाचा** - वागिन्द्रियेणैव अभिव्याहाररूपं स्वकार्यं सम्पादितम्। प्रायेण घ्राणेन्द्रियेणैव केवलेन मां विना अनुप्राणितं समाघ्राणरूपं स्वकार्यं कृतम्। **श्रोत्रेण** - च स्वकार्यं श्रवणरूपं **त्वचा** त्वगिन्द्रियेण स्वकार्यं स्पार्शनप्रत्यक्षरूपं **मनसा** - ध्यानरूपम् **अपानेन** - पाय्विन्द्रियसहचरितेन **अभ्यपानितम्** - ओदनाद्यदनीयं वस्तु शरीरान्तर्गतं कृतम्। भक्षितमित्येतत्। तदा अहं कः स्याम्? कस्याहं स्वामी भवेयम् यथा पुरस्वामिनं विनैव पौरा यदि पुरकार्यं विदध्युः तदा पुरस्वामी न कोऽपि भवति तथा मां विना प्राणादिभिः स्वस्वकार्यं यदि क्रियेत तदा न कोऽपि भवेयं नाहं पुरस्वामी स्यां नाहमस्य शेषी स्यां न चेदं शरीरं तदन्तर्गतानि करणानि तदधिष्ठातारो वा देवा वा मम शेषभूताः स्युः तथा च सर्वशेषिणं सर्वस्वामिनं सन्तमपि मां कोपि अवगच्छेदयं मम स्वामी शेषी नियन्ता यदधीनो अहम् अत एतदवगमायाऽपि मया अत्र सर्वशेषिणा स्वशरीरभूतजीवद्वारा अनुप्रवेष्टव्यमिति पर्यालोचयदित्यर्थः। एतेन द्वितीयं स्वप्रवे-शप्रयोजनं चिन्तितं फलितं भवति।

**सु.** -परमेश्वरः सृष्ट्वा इदं करणकलेवरलक्षणप्राणिजातम् **ईक्षत** - विचारितवान्, **इदं मदृते** - मां विना **कथं स्यात्** - सत्तां प्राप्नुयात्, स्थितिरस्य कथं घटेत इत्येतत्। तदवश्यमिहानुप्रविश्य मया स्थेयमिति। पुनः **ईक्षत** - विचारितवान् **कतरेण** - मुखनासिकादिद्वारेषु कतरेण द्वारेण इदं **प्रपद्ये** - प्रविशेय इति। सर्वमिदं मुखादिद्वारं ममैव प्रेष्यवर्गैः अभिव्याप्तम्, तन्मम सर्वस्वामिन इदं द्वारंतु न प्रवेशार्हम्, तदन्येन द्वारेण प्रवेष्टव्यमिति। **स** पुनः **ईक्षत** - विचारितवान्। इह शिरःपाण्यादिलक्षणे पिण्डविशेषे कर्त्रा केनचित् भाव्यम्, इमानि वागादीनि तु व्याहरणादिक्रियाकरणान्येव, न च तान्येव कर्तॄणि, **यदिवाचा व्याहृतम्** - वाक्कर्तृकमेव व्याहरणम्, **यदि प्राणेनाभिप्राणितम्** - प्राणकर्तृकमेवाभिप्राणनम्, एवं चक्षुरादिकमेव दर्शनादिकर्तृ, अथाहमिति - अहं व्याहरामि अहं पश्यामि अहं शृणोमीति सर्वक्रियाकर्तृतया अनुगतः ख्यायमानः कः, तत् व्याहरणादितत्तत्क्रियामात्रकरणानां न कर्तृता उपपद्येत, तेभ्यो विलक्षणेन जीवेनाहमर्थेन कर्त्रा भोक्त्रा सन्निधातव्यमिह, तदहं जीवो भूत्वा प्रविशामि, यथा अग्निर्वाग्भूत्वा यथाऽदित्यश्चक्षुर्भूत्वा तथा। वागादिकम् अधिष्ठाय अग्न्यादिरिव जीवमधिष्ठायाहमिह अपूर्वेण द्वारेण प्रविशामि इति सङ्कल्पमकरोत् इति यावत्।

[प्रवेशमार्गनिरूपणम् ]

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम् ॥ तस्य त्रय [1]आवसथाः त्रयः स्वप्नाः ; अयमावसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥**

**प्र.दी. - स एतमेव सीमानं इत्यादि** । **सः** - जीवः परमात्मा च **एतमेव सीमानं** - देहस्यावधिभूतं 'शतं चैकाचे **(कठ.उ. ६.१६)** ति श्रुत्युक्त ब्रह्मरन्ध्रं विदार्य - निर्भिद्य **एतया द्वारा** - ब्रह्मरन्ध्रमार्गेण गुहां प्रविष्टौ आत्मानौ हि तद्दर्शनात् (ब्र.सू. १-२-११) जीवपरमात्मानौ जीवहृदयगुहाप्रविष्टौ इत्युक्तत्वात् । उभौ एतस्मिन् विराट्शरीरे प्रविष्टौ । **सैषा विदृतिर्नामतदेतत् द्वारं नान्दनम्** - इत्युच्यते । नन्दनं आनन्दमित्यर्थः । नन्दनमेव नान्दनं स्वार्थेऽण् ।

ब्रह्मविदः अनेन ब्रह्मरध्रमार्गेण गत्वा परब्रह्मभूतश्रियःपतिं लब्ध्वा नन्दन्ति आनन्दं प्राप्नुवन्तीति एतस्य द्वारस्य नान्दनमिति नाम - एतादृशं पुरसदृशं देहं राजेव प्रविश्य कुत्र स्थित इत्याकांक्षायामाह । **त्रय आवसथा** इत्याह - जाग्रदवस्थयां दक्षिणं चक्षुरिन्द्रियं एकं स्थानम् । स्वप्नकाले अन्तर्मनः द्वितीयं स्थानम् । सुषुप्तिकाले हृदयाकाशं दहराकाशसंज्ञकं परं ब्रह्म तृतीयं स्थानम् । एतानि जीवस्थानानि त्रयस्य स्वप्नाः जाग्रत्स्वप्नसुषुप्तयः । कथं जाग्रदवस्थायाः स्वप्नतुल्यत्वं जाग्रत्कालेपि परमार्थज्ञानाभावात् इत्यर्थः । आवासस्थानत्रयविशिष्टजाग्रदवस्थादित्रययुक्तपुरसदृशमेतच्छरीरं समष्टिजीवस्यास्य विराट्पुरुषशरीरमित्युक्तम् । **अयमाव-[2]सथोऽयमावसथोऽय** मित्यादिना उक्तम् । दक्षिणं चक्षुः - प्रथम इति । अन्तर्मनः - द्वितीयं इति दहराकाशः परं ब्रह्म तृतीयं इति आवसथत्रयं पूर्वमेवोक्तमिति ज्ञेयम् ।

**प्र. - स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत** । एवमीक्षित्वा मद्भृत्यभूतप्राणवर्ग द्वारभूतमुखादिना स्वामिनो मम प्रवेशोऽनुचित इति मत्वा **मूर्धसीमानं विदार्य तद्द्वारा**, 'अनेन जीवेनात्मना' (छां.उ. ६-३-२) इति श्रुत्यनुसारात् जीवशरीरकतया प्रविवेश इत्यर्थः । **सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम्** । तदेतद् द्वारं विदारितत्वात् विदृतिसंज्ञकम् । तदेतद्द्वारं **नान्दनं** - नन्दनम् । द्वारान्तरवत् न जुगुप्सितमित्यर्थः । स्वार्थे अण् । **तस्य त्रय आवसथाः त्रयः स्वप्नाः अयमावसथोऽयमावसथोऽयमावसथ इति** । तस्य जीवशरीरकस्य आत्मनः त्रयः स्वप्नवदाश्चर्यभूताः आवसथाः के ते? अयमावसथः - जाग्रद्दशायां चक्षुः, स्वप्नदशायाम् अन्तःकरणम् , सुषुप्तिदशायां हृदयाकाश इति ॥

---

1. **आवसथः** - आङ् उपसर्गपूर्वक 'वस निवासे' इति धातोः 'उपसर्गे वसेः' (उणादिसू. ३९६) इति सूत्रेण अथःप्रत्यये आवसथः इति रूपम् । आवसन्ति अत्र इति अधिकरणे अथ । गृहम्' आवासस्थानमित्यर्थः ।

2. नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समाविशेत् । सुषुप्तं हृदयस्थं तुतुरीयं मूर्ध्नि संस्थितम् ॥ इति ब्रह्मोपनिषदि (२९ )॥

वक्ष्यमाणा वा त्रय आवसथाः पितृशरीरम् , मातृगर्भाशयः स्वं च शरीरम् इति ॥ शांकरभाष्यम् ।

**आ.भा.** - पूर्वं प्रदर्शितेषु मार्गेषु पादाग्ररूपो मार्गः प्राणवायुप्रवेशमार्गः । मुखादिरूपा मार्गास्तु वागिन्द्रियादिप्रवेशोपयोगिनः । प्राणवागादयः सर्वे एव परमात्मनः प्रेष्यवर्गान्तर्गताः । तस्मात् पुरस्वामी यथा भृत्यप्रवेशमार्गेण प्रवेशमनुचितं मन्यते तथैव परमात्मापि स्वप्रेष्यप्रवेशोपयुक्तमार्गेषु न केनापि स्वप्रवेशमुचितम् अमन्यत। परिशिष्ट एको मार्गो ब्रह्मरन्ध्रात्मको नानेन तदीयप्रेष्येषु कश्चिदपि प्रवेशं लभते पौर इव पुरस्वामिप्रवेशमार्गेण । इत्थं ब्रह्मरन्ध्रेणैव स्वप्रवेशमवधार्य **स** - परमात्मा **एतमेव** - मूर्धमध्यगतमेव **सीमानं** - कपालद्वयसन्धिरूपं **विदार्य** - पृथक्कृत्य । दलद्वयं विभज्य इत्येतत् । एतया च्छिद्ररूपया **द्वारा** - मार्गेण **प्रापद्यत** - प्रविष्टवान् । अत्र कार्यकरणसंघातात्मके शरीर इत्येतत् । परमात्मनः प्रवेशः जीवद्वारक एव । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ. ६ ३-२) इति श्रुत्यन्तरे जीवशरीरकस्यैव परमात्मनः अनुप्रवेशावगमात् ।

अस्य मार्गस्य संज्ञां गुणंच निर्दिशति - **सैषा** इति । सेयं श्रुत्यन्तरेष्वपि प्रसिद्धा द्वारं **विदृतिः** नाम विदृतिरिति संज्ञा तस्य द्वारमित्यर्थः । विदारणेन सम्पादितत्वात् अस्य मार्गस्य विदृतिरिति नाम जगत् । **तदेतद्द्वारं नान्दनं** - द्वारमुच्यते । नन्दति अनेनेति नन्दनं तदेव नान्दनम् । अनेनैव मार्गेण गतः परमात्मोपासको मोक्षस्थानमधिरोहति आनन्दमयं परमात्मानं प्राप्नोति ततश्च नन्दति परमात्मस्वरूपभूतं परमानन्दमनुभवति च तस्मात् आनन्दानुभवसाधनम् एतन्नान्दनमित्युच्यते । यद्वा इदमपिनामान्तरमेव तस्य द्वारस्य मन्तव्यम् । मुखादिमार्गस्य नानन्दहेतुत्वं तद्द्वारेण निर्गतस्य मोक्षस्थानप्राप्त्यकथनात् । अस्यतु तयोर्ध्वमायन्नमृतत्वमेति (कठ.उ. ६-१६) इति श्रुतेरमृतत्वोपायत्वावगमात् नान्दनमिति व्यपदेशो युक्तो न मुखादीनामिति भावः ।

ननु जीवशरीरकः परमात्मा शरीरमनुप्रविशतीत्यवगतं परन्तु शरीरे प्रविश्य स कुत्र शरीरभागे तिष्ठतीति वक्तव्यमाकांक्षितत्वात् । अत्राह- **तस्येति** । **तस्य** - जीवेनात्मनाऽनुप्रविष्टस्य परमात्मनः **त्रयः** - त्रिसंख्याकाः **आवसथा** - निवासस्थानानि अस्मिन् शरीरे भवन्ति कदाचिद् दक्षिणमक्षि, कदाचित् कण्ठः, कदाचित् हृत्कमलकर्णिकाग्रभाग इति जाग्रत्स्वप्नसुषुप्तिदशा जीवेषु भवन्ति । तन्निर्वाहकः तत्तच्छरीरवेषेण तत्र तत्र स्थाने स्थितोऽयं भवति । स्वप्नाः स्वप्नसदृशाः **त्रयः स्वप्नाः** - पृथग्भूतान् आश्चर्यकरान् पदार्थान् दर्शयन्ति, तथा त्रिविधा अस्य **आवसथाः** - आश्चर्यकरा इत्येतत् । जाग्रत्स्वप्नसुषुप्तिभेदेन त्रिविधान्यपि निवासस्थानानिअस्य स्वप्नवदाश्चर्यकारीणि भवन्तीत्येतत् । आवसथानेव प्रसिद्धवन्निर्दिशति - **अयमावसथ** इति । यथा राजा तत्तत्स्थानेषु स्थित्वा राज्यशासनं श्रौतस्मार्तक्रिया अन्तःपुरवर्गरंजनं च कुरुते तथा प्रविष्टो जीवशरीरकः परमात्मापि जाग्रदाद्यवस्थासु अक्ष्यादिस्थानगतो जीवस्य तत्तन्निर्वाणहेतुः भवतीति भावः ।

**सु. - स -** सर्वेश्वरः, एवं कृतसङ्कल्पः **एतमेव सीमानं** मूर्धाख्यं, मूर्धा ह्यस्य पिण्डविशेषस्य सीमा, **विदार्य एतया -** मूर्धानमभिनिःसृतया सुषुम्णाख्यया नाड्या **द्वारा प्रापद्यत ।** द्वारं स्तौति - **सैषा द्वाःविदृतिर्नाम -** विदारणेन विनिष्पत्तेः । **तदेतत् द्वारं नान्दनम् -** आनन्दमयस्य परमात्मनः प्रवेशद्वारतया आनन्दमयप्राप्त्याधायकद्वारतया च नान्दनम् । इतराणि तु दुःखैकमूलवागादिप्रवेशास्पदतया दुःखमयान्येव ।

**तस्य -** जीवेनात्मना शरीरमिदं प्रविष्टस्य परमात्मनः **त्रय आवसथा -** आवासस्थानानि - जातु नेत्रं जातु शरीरे कण्ठः जातु हृदयाकाशमिति । जीवशरीरकत्वविशिष्टवेषेण इह सन्निहितो जाग्रद्दशायां नेत्रे सन्निधत्ते, स्वप्नदशायां कण्ठे, सुषुप्तिदशायां हृदयाकाशे । तत्तद्दशानिर्वाहकतया तस्यास्य तत्रतत्र सन्निधिः । तानेवावसथभेदान् **अयमावसथोऽयमावसथोऽयमावसथ इति** प्रसिद्ध्या निर्दिशति । **त्रयःस्वप्नाः** शरीरमिदमनप्रविष्टस्यास्य जाग्रदाद्याः त्रयः स्वप्नाः । कथमेतेऽस्य स्वप्ना उच्यते । सत्यमवस्थाभेदा जीवमपेक्ष्य, परमात्मनस्तु ततोऽन्यस्य तद्रूपयोगे न तदात्मना भूत्वा तदवस्थात्मदर्शनं स्वप्न एवेति न तदवस्थावैषम्यम्, स्वयमसाधारणान्यरूपोऽतद्रूपतां प्राप्य तदात्मना तद्रूपं तदवस्थं च पश्यतीति यत् स्वप्न एव हि सः ।

न च अपारमार्थ्यं बाह्यार्थस्य, स्वप्नोऽपि हि नापरमार्थः । एवं स्वप्नसाम्यात् स्वप्न इति निर्देशः । अयं भावः - यथा कश्चित् स्वेन रूपेण देवदत्तः स्वयम् अक्षत्रियोऽपि अश्रोत्रियोपि अव्याघ्रोपि स्वप्ने विजातीयदेहयोगमापन्नः पश्यत्यात्मानं क्षत्रियं श्रोत्रियं व्याघ्रं वाऽन्यं कमपि, तथायं स्वयमानन्दमयः स्वेनासाधारणेन रूपेण स्थितः सन्नपि तत्तज्जीवरूपशरीरान्तरयोगमापन्नः स्वयमजाग्रदवस्थोऽपि जाग्रदवस्थम् अस्वप्नावस्थोऽपि स्वप्नावस्थम् असुषुप्त्यवस्थोपि सुषुप्त्यवस्थं क्षणमात्रमनुभवति । अकालपच्यदेशविशेषैकनिलयस्य सर्वः प्रपंचसमयोऽत्यल्प एवेति न वैषम्यम् । स्वाप्ने न नानुलिप्यते पुरुषः, (न पुण्यपापोपलेपः) परमात्मा जीवात्मना भूत्वा साध्वसाधु पश्यन् कुर्वन् न लिप्यते पुण्येन पापेन वा, तदस्य जाग्रदादयोऽपि स्वप्ना एवेति । एतेन सर्वप्रकारेण अवस्थितस्य सर्वात्मना सर्वमनुभवतोऽस्य त्रीणि जागरितान्येव वक्तुं युक्तमिति शङ्का अपास्ता ॥

[नामरूपव्याकरणादि]

**स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीं ॥ १३ ॥**

**प्र.दी.** - 'अनेन जीवेनात्मनाऽनुप्र विश्य' (छां.उ. ६-३-२) इति श्रुतेः परमात्मना अस्मिन् प्रविष्टे, जीवः सः कदाचित्, 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः' (महा.भा.मोक्ष.उ. ३-५८-७३)

इत्युक्तप्रकारेण भगवत्कटाक्षपात्रो जातः, यद्वा आचार्यकटाक्षपात्रो जातस्सन् **भूतान्यभिव्यैक्षत्** - व्यष्टिभूतानि सर्वाणि एतादृशानि इति दृष्टवान् - ज्ञातवानित्यर्थः । **इह** - अस्मिन् शरीरे-विद्यमानं किं अनिर्वाच्यं वस्त्वस्ति वागादिव्यापारवतः चेतनात् जीवात् यत्किमनिर्वाच्यं वस्तु वर्तते, तं **अन्यं,** - परमात्मत्वेन **वावदिषदिति** - उक्तवान् ज्ञातवान् इत्यर्थः । यङ्लुगन्तं पदम् । **सः** - जीवः, **एतमेव पुरुषं** - परमात्मानं पुरुषं, पुरिशयानं **ततं** - सर्वव्याप्तं **ब्रह्म** - बृहत्वादिगुण-विशिष्टनारायणत्वेन **अपश्यत्** । **इदमदर्शमितीं इति** प्लुतः परब्रह्मस्वरूपं **अदर्शं** - बहोः-कालदृष्टमहो मया इति आश्चर्यार्थे प्लुतिः ।

**प्र. - स जातो भूतान्यभिव्यैख्यत्** । **सः** - तस्मिन् प्रविष्टस्सन् सर्वाणि पंचभूतानि नामरूपवत्तया अकृत इत्यर्थः । (वैक्षत् नामरूपव्याकरणं) जीवशरीरकः सन् प्रविष्टः नामरूपभागभदित्यर्थः । **किमिहान्यं वावदिषदिति** । यत् किंचित् वस्त्वस्ति तत् सर्वम् , एकात्मतया स्थितः **अन्यंवावदिषत्** वाशब्द इवार्थे - एकात्मतयास्थितं वस्तु दृश्यमिवभिन्नात्मकमिव विवदितुमैच्छत् । अवि(वि)दिषदित्यस्य **अवदिषदिति** छान्दसं रूपम् । **स एतमेव पुरुषं, ब्रह्मततममपश्यदिदमदर्शमिति - परोक्षप्रिया इव हिदेवाः** । **सः** - जीवः **एतमेव** - जीवशरीरकं **पुरुष-**शब्दितवासुदेवं **ततमं** - व्याप्ततमं **ब्रह्म** - निरतिशय बृहत्वाश्रयं **अपश्यत्** । नारायणमेव ब्रह्मभूतं ज्ञातवानित्यर्यः । कथं ज्ञातवानित्यत्राह **इदमदर्शमिति** । हस्तामलकवदिदमदर्शमिति ब्रह्म साक्षात्कृतवानित्यर्थः । अत्र **ततमम्** इत्यत्र एकतकारलोपश्छान्दसः । (ब्रह्म तततमं ब्रह्मणा व्याप्तं पुरुषम् अपश्यत् ) अत्र ब्रह्मणिदृश्यमाने **इदं** शब्दप्रयोगात् प्रत्यग्ब्रह्मणोर्भेदार्थ (?) सूचनमिति द्रष्टव्यम् । तनोतेश्च विस्तारार्थस्य व्याप्तिरर्थः । तेन व्याप्ततमम् इत्यर्थःफलति । व्याप्ततमं ब्रह्म अपश्यदित्युक्तम् । तत्र दर्शनाकारमेवाभिलपति **इदमदर्शमिति** । **इदं** - व्याप्ततमं स्वस्वरूपं ब्रह्म बृहत्तमं वस्तु **अहमदर्शं** दृष्टवानस्मि इति तदर्थः । **इति** शब्द इदमदर्शमित्यस्य दर्शनस्य स्वरूपनिर्देशकः । तत्र प्लुतत्वविधानं हर्षसूचकम् । सर्वत्र स्वात्मदर्शनस्य हर्षहेतुत्वम् ।

**आ.भा. - सः** - परमात्मा **जातः** - जीवेनात्मना शरीरमनुप्रविष्टः सन् **भूतानि** - पंचीकृतानि पृथिव्यादीनि **अभिव्यैख्यत्** - नामरूपाणि व्याकरोत् ; जीवशरीरकोऽनुप्रविश्य नामरूपाणि कृतवा-नित्यर्थः । **इह** - प्रपंचे समग्रे मदनुप्रवेशविशिष्टे, **अन्यंवा** - अन्यमिव **किमवदिषत्** - अवदिष्यत् । शरीरशरीरिभावेन सर्वत्राहं स्थितोऽस्मि तेन सर्वः प्रपंचो मदात्मक एव तदात्मक एव शब्दोऽस्ति यो मदन्यमिव प्रपंचं वक्तुमिच्छेत् शक्नुयात् इत्येतत् । वाशब्दः इवार्थे । अवदिषदिति छान्द-संरूपम् । सर्वेषु अचेतनेषु भूतेषु प्रकारतामापन्नेषु प्रकारितया अवस्थितोऽहमेवनान्य इति निश्चितवान् । एवमचेतनेषु प्रकारितयाऽवस्थितं स्वमेव चेतनेष्वपि प्रकारितयाऽवस्थितं स्वमेव **अपश्यत्** । सर्वं सृष्टिकर्ता । इति दर्शयति - **स एतमेवेति** । **सः** - परमात्मा **एतमेव** - सर्गकर्तृतया प्रकृतं **पुरुषं** - स्वात्मानमित्येतत् । **ततमं** - व्याप्तम् । चेतनाचेतनेषु सर्वेषु प्रकारितया वर्तमानत्वात् अतिशयेन व्याप्तमित्येतत् । ब्रह्म स्वरूपतो गुणतश्च निरतिशयबृहत् **अपश्यत्** - दृष्टवान् ।

सर्वत्रव्याप्तब्रह्मत्वेन स्वात्मानमेव अपश्यदित्यर्थः । **ततम्** - इत्यत्र एकस्य तकारस्य छान्दसो लोपः । तततममिति पदाकारः ।

पूर्वं जातस्य तस्य अचेतनप्रकारतया स्वात्मदर्शनम् उक्तम् । अधुना चेतनप्रकारतया आत्मदर्शनम् उच्यते - **स एतमिति** । **सः** - सर्वस्य स्रष्टा सर्वेश्वरः **इदं** - सन्निहितमर्थजातं **अदर्शम्** - अपश्यम्, इदमुपलक्षकमशृणवम् इत्यादेः, इति **अपश्यत्**; सन्निहितार्थदर्शनादिक्रिया-कर्ताऽहमस्मीत्यपश्यत् इति यावत् । **इती** इति प्लुतेन लीलारसानुभवजनितो हर्षो गम्यते । ननु स्रष्टुः सर्वेश्वरस्य भोक्तृधर्मभूतं सन्निहितार्थदर्शनादिकर्तृत्वं कथमुपपद्यते येनैवं दर्शनं लीला-रसानुभवःस्यात्, उपपाद्यते - स तदाहमिति **ततमं** - ब्रह्म एतमेव **पुरुषं** - अपश्यत्, **ततमम्** - पिण्डेऽस्मिन् सन्निहितेषु करणभोक्तृनियन्तृषु अन्यतमं मुख्यं नियन्तृभूतं परब्रह्मलक्षणमेतमेव **पुरुषम्** - जीवात्मभावेन (जीवशरीरकतया) अनुप्रविष्टं पुरिशयानात् पुरुषमेव **अपश्यत्** । पिण्डविशेषशरीरकजीवविशेषशरीरकत्वविशिष्टवेषेण स्वात्मानमेव अहमर्थतया अपश्यदिति, इदमहमदर्शमिति सन्निहितार्थानुभवकर्तृतया स्वानुभवः तस्य समुचितः ।

यद्वा **सः** - सर्वस्य स्रष्टा स्वात्मभूतेन जीवेन इममनुप्रविष्टः, **एतमेव पुरुषम्** - अग्न्यादिभिः लोकपालैः वागाद्यात्मना प्रविश्य मुखादाववस्थितैः **ततमपि** - व्याप्तमपि **पुरुषं** - शिरःपाण्यादिलक्षणं पिण्डविशेषं **ब्रह्म ततमम्** - ब्रह्मणा स्वेन व्याप्ततमम्, जीवात्मनोऽप्यात्मतया ह्यनुप्रविष्टः, **अपश्यत्** - निश्चितवान् । एकस्तकारोऽत्र लुप्तः । एवमवधार्य जीवकर्तृकानपि दर्शनादिव्यापारांस्तदात्मभूते तत्प्रकारेणावस्थिते स्वस्मिन्नेव अन्वितान् पश्यन् अहमिदमदर्शम् अहमदोऽपश्यम् इत्यपश्यदात्मानम् ।

**सु. - सः** - परमात्मा जीवेनात्मना देहम् इममनुप्रविष्टः, अत एव अपूर्वदेहयोगेन **जातः**, न कर्मणा किन्तु स्वेच्छया, सोऽयमेवं जातमात्रो **भूतानि** - जीवात्मभूतेन (जीवशरीरकेण) स्वेनानुप्रविष्टकनि मानुषादिसंस्थानानि **अभिव्यैख्यत्** - स्वस्याभिमुख्येन स्वासाधारणधर्मतया **व्यैख्यत्** - विशेषतो निश्चितवान्, तत्प्रकारमात्मानं **अपश्यत्**, इत्येतत् । सर्वोऽपि वाचकः शब्दः इह प्रकारप्रकारिभावेन अवस्थितेऽस्मिन् मदनुप्रविष्टे प्रपंचे मत्तः अन्यं किमवदिषत् - अवदिष्यत्, छान्दसः प्रयोगः, वक्तुं शक्नुयादित्येतत् । इति च व्यैख्यत् - निश्चितवान् ।

[इन्द्रशब्दवाच्यः परमात्मा]

**तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्त[1]मिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥ १४ ॥**

**इति तृतीय खण्डः**

---

1. इन्द्रः - परमेश्वरः । 'इदि - परमैश्वर्ये' इति हि धातुः । 'माया वयुनं ज्ञानमिति नैघण्टुकाः । मायाभिः - सङ्कल्परूपज्ञानैः - विचित्राश्चर्यकारित्वात् ज्ञानरूपत्वाच्च मायाशब्दितत्वं सङ्कल्पस्य उपपद्यते - पुरुरूपः - बहुशरीरः - स परमेश्वरः । स्वसङ्कल्परूपज्ञानेनैव बहुशरीरो भवति, न कर्मापेक्षया - तादृशबहुशरीरस्सन् वर्तत इत्यर्थः । स्वेच्छागृहीतानन्तदेह इति यावत् । इति रङ्गरामानुजभाष्यम् (बृ.उ. ४-५-१९)

**प्र.दी. - तस्मादिदन्द्रो नामेति** यस्मात् - यत्साक्षादपरोक्षाद्ब्रह्मा सर्वान्तरमपश्यत् **तस्मात्** - परमात्मसाक्षात्कारात् इदं जगदस्मिन् द्राति प्रलयकाले उपरतिं प्राप्नोतीति **इदन्द्रः** - परमात्मा तस्य परमात्मनः **इदन्द्र** इति **नाम । हवै** प्रसिद्धिबोधकः । **तमेवं इदन्द्रं सन्तं इन्द्रमित्याचक्षते ब्रह्मविदः** - संव्यवहारार्थं पूज्यतमत्वात् प्रत्यक्षनामग्रहणभयात् इन्द्रमित्यचक्षते । इदन्द्र इत्यत्र 'द्रा - कुत्सायां गतौ' (धा.पा. १०५४) इति धातुः । इदन्द्र इति लोके प्रसिद्धं परमात्मनः प्रत्यक्षनामग्रहणभयात् इन्द्रमित्याचक्षते ब्रह्मविदः यतः **देवाः परोक्षनामप्रियाः** । परोक्षनामग्रहणे प्रियो भवन्ति चेत् सामान्यदेवाः किमु सर्वेश्वरो नारायण इति वक्तव्यं यदा [1]इन्द्रो मायाभिः पुरुरूप ईयते (बृ.उ. ४-५-१९) इत्यादिना इन्द्रशब्दः परमात्मनि नारायणे परमैश्वर्यरूपधात्वर्थस्य विद्यमानत्वान् मुख्यवृत्तः । तथापि **देवाः** - परोक्षेण नाम्नाग्रहणे **प्रियाः** भवन्तीति कृत्वा **परोक्षप्रियाः** भवन्ति सामान्यदेवाः किमु सर्वेश्वरः अतः ब्रह्मविदः प्रसिद्धं इन्द्र इति नामानुक्त्वा - **इदन्द्र इत्याचक्षते** - ब्रह्मविदः लोके सामान्यदेवानामेव परोक्षप्रियत्वमस्तिचेत् सर्वेश्वरस्य श्रियःपतेः किमु वक्तव्यमिति भावः । एवमेव अस्मत्पूर्वाचार्येष्वपि अयमाचारो दृश्यते । अद्यापि अस्मत्सिद्धान्तकर्तुः रामानुजार्य इति लक्ष्मणार्य इति पित्रादिदत्तं प्रसिद्धं नाम वर्तते । सरस्वत्या अयमेव भाष्यकार इति एतस्य नाम दत्तं तत्प्रभृति तस्य रामानुजार्यस्य तस्मिन्नेव नाम्नि प्रियं दृश्यते। तस्मादेव सर्वे ज्ञानिनः भाष्यकार इति एनं वदन्ति। अयं तु सर्वमतशिष्टजनाचार इति ज्ञेयः ॥

**इति तृतीयखण्डप्रतिपदार्थदीपिका**

**प्र. - तस्मात्** इदं दृष्टवानिति प्रवृत्तिनिमित्तवशात् **इदन्द्र** इति तन्नाम्नि प्रयोक्तव्ये इन्द्र इति परोक्षेण आचक्षते । न तु स्पष्टमिदन्द्र इति । तत् कुत इत्यत्राह - **परोक्षप्रिया इव हि देवा** इति। देवानामनतिस्फुटतया कथनमेव प्रियं भवति । अतः इन्द्र इत्येवाचक्षते । नत्विदन्द्र इति इत्यर्थः ॥

**इति तृतीयखण्डप्रकाशिका**

**आ.भा. -** एवं चेतनाऽचेतनप्रकारिभूतं स्वस्वरूपदर्शनमभिधाय सर्वत्र इदन्तया स्वद्रष्टृत्वनिमित्तकं नाम निर्वचनं कुरुते - **तस्मादिति** । यस्मादिदन्तया स्वात्मदर्शनं

---

१. तथा च शतपथब्राह्मणे - 'परोक्षकामाहि देवाः' इति (६-१-१-२) ऐतरेयबह्मणे - यन् मादुषं सन्मानुषमित्याचक्षते परोक्षेण परोक्षप्रिया इवहि देवाः (३-३३) तथा - न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण । (७-३०) (३५-४) न्यग्रोधशब्दं निर्वक्ति - ते चमसा यद्यस्मात्कारणान्न्यश्चोधोमुखा अरोहन्प्रादुर्भूतास्तस्मात्कारणात् न्यङ्ङधोमुखो रोहति प्रादुर्भवतीति व्युत्पत्या न्यग्रोहः सम्पन्नः । स च वस्तुतो न्यग्रोह इत्येव नामार्हति तस्य नाम्नः व्युत्पत्त्यनुसारित्वात् । तथापि न्यग्रोहं सन्तं वृक्षं लौकिका हकारस्य धकारादेशं कृत्वा न्यग्रोध इति परोक्षनाम्ना व्यवहरन्ति देवानां पूज्यानां आचार्योपाध्यायादीनां परोक्षनामप्रियत्वात् ॥ इति सायणभाष्यम् ।

हस्तामलकदर्शनवत् प्रत्यक्षं सोऽकरोत् तस्मादेव हेतोः **इदन्द्रोनाम** स परमात्मा । इदं ब्रह्म स्वात्मभूतं सर्वत्र व्याप्ततमं दृष्टवान् इति इदन्द्रः । एतमेवार्थं द्रढयति - **इदन्द्रो हवा इति । ह** शब्दः प्रसिद्धिद्योतकः । **वै** शब्दोऽवधारणार्थः । इदन्द्र इति नाम परमात्मनः प्रसिद्धमिति निश्चित-मित्यर्थः । **तं** - परमात्मानं **इदन्द्रं सन्तमेव इदन्द्रेति** प्रसिद्धनामविशिष्टमेव क्वचिद् **इन्द्र इति नाम्नाऽपि परोक्षेण आचक्षते** वदन्ति ब्रह्मविदः । नाम्नः परोक्षत्वं रूपान्तरकरणेन वास्तविक स्वरूपाच्छादनमेव । इदन्द्र इति वास्तविकनाम्नः स्वरूपमिन्द्र इति नामान्तरकरणेन भवत्याच्छादितम् । अत एव 'इन्द्रो मायाभिः पुरुरूप ईयत' (बृ.उ. ४-५-१९) इत्यादि श्रुतिषु इन्द्र इति परोक्षनाम्नैव निर्देशः परमात्मनो दृश्यते । साक्षात् इदन्द्रपदेन कथं न तत्कथनमित्यत्र हेतुमाह - **परोक्षप्रिया इति । देवाः** - इन्द्रादयः **परोक्षप्रियाः** - परोक्षेण नाम्ना स्वव्यपदेशं प्रियं मन्यन्ते इति परोक्षप्रियाः । इव शब्दस्य क्वचित् प्रसिद्धनाम्ना निर्देशेऽपि न क्षतिरित्यभिप्रायः । अत एव यागादिषु प्रसिद्धेनैव नाम्ना व्यपदेशेऽपि मनोहानिः न भवति तेषाम् । इतरत्रतु देवराजादिनाम्नैव व्यपदेशः तेषां प्रियः । देवानाम् ईदृशं परोक्षव्यपदेशप्रियत्वं चेत् सर्वदेवदेवस्य परमात्मनः परोक्षप्रियत्वमिति किमु वक्तव्यम् । कैमुतिकन्यायसिद्धमेव परोक्षप्रियत्वं परमेश्वरस्येत्येतत् । लोकेऽपि पित्रुपाध्यायाद्यैः तदीयनाम्ना देवदत्तादिना व्यपदेशो न क्रियते विवेकिभिः तादृशव्यपदेशस्य पित्रुपाध्यापादीनामप्रियत्वात् । हिशब्दो हेत्वर्थकः । द्विरुक्तिरध्यायसमाप्तिसूचिका ॥

**इति तृतीयखण्ड आनन्दभाष्यम्**

**सु.** - यस्मात् सर्वान्तरात्मा सोऽयं तत्तदात्मनाऽनुप्रविश्य सर्वमिदमिति पश्यति **तस्मादिदन्द्रो नाम,** यस्मादिदन्द्रो नाम, तस्मादिदन्द्रं **सन्तम्** - एनम् **इन्द्र इति** परोक्षनाम्ना **आचक्षते**, 'इन्द्रो मायाभि' (बृ.उ. ४-५-१९) रिति च श्रूयते । तथा व्यवहारे निमित्तमाह **परोक्षप्रिया इति** । देवा हि परोक्षनाम्ना निर्देशे प्रीतिमावहन्ति । महतां साक्षान्नाम्ना निर्देशो हि न समुचितः । अध्याय परिसमाप्त्यर्था द्विरुक्तिः ।

**इति तृतीयखण्ड सुबोधिनी**

* * *

# चतुर्थः खण्डः

[पुरुषस्य प्रथमं जन्म]

**(अपक्रामन्तु गर्भिण्यः)**

**[1]पुरुषो हवा अयमादितो गर्भो भवति यदेतद्रेतः। तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवात्मानं बिभर्ति। तद्यदा स्त्रियां सिंचति, अथैतज्जनयति। तदस्य प्रथमं जन्म ॥ १ ॥**

**प्र.दी.** - समष्टिजीववर्णनानन्तरं सः व्यष्टिजीवः, एवं संसरन् उपात्तदेहेन्द्रियसंघातं त्यजति त्यक्त्वा अन्यच्छरीरमुपादत्ते । पुनरेवमेव नदीस्रोतोवज्जन्ममरणनिबन्धनाविच्छेदेन वर्तमानः काभिरवस्थाभिः वर्तत इत्येवमर्थं दर्शयन्त्याह श्रुतिः । वैराग्यहेतोः अयमेव अविद्याकामकर्मवान् यज्ञादिकर्म कृत्वा अस्माल्लोकात् धूमादिक्रमेण चन्द्रमसं प्राप्य - क्षीणकर्मा वृष्ट्यादिद्वारा इमं लोकं प्राप्यान्नभूतः पुरुषाग्नौ हुतः तस्मिन् - **पुरुषे हवै** - हवै इति प्रसिद्धिवाचकः। **अयम्** - संसारी जीवः रसादिक्रमेण **आदितः** - प्रथमं रेतो रूपेण [2]**गर्भो भवति यदेतद्रेतो** वर्तते । **तत्सर्वेभ्योऽङ्गेभ्यो** - सर्वावयवेभ्यः तेजस्सारभूतं संभृतं सत् **आत्मन्येव** पितृदेहस्वात्मन्येव **आत्मानं** - जीवस्वरूपं **बिभर्ति** । **तदेतदिति** । **तत्** - रेतोभूतजीवस्वरूपं **यदा** - यत्काले भार्या ऋतुमती तस्यां योषाग्नौ **स्त्रियां** सिंचति अथ तद्रेतः आत्मनः गर्भभूतं जनयति । पिता तत् अस्य पुरुषस्य स्थानात् निर्गमनं रेतस्सेककाले रेतोरूपेणास्य संसारिणः **प्रथमं जन्म** - प्रथमावस्थाभि-व्यक्तिः तदेतदुक्तं पुरस्तात् असावात्मा अमुमात्मानमित्यादिना ।

**प्र.**- वैराग्यसिद्ध्यर्थं [जन्ममरणप्रबन्धं तदवस्थाश्च श्रुतिः दर्शयति] **पुरुषे हवा अयमादितो गर्भो भवति, यदेतद्रेतः** । अयं संसरन् पुरुषः प्रथमतो रेतोरूपेण गतोऽभवन् । **तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजस्संभूतमात्मन्येवात्मानं बिभर्ति** । पुरुषस्य सर्वेभ्योऽङ्गेभ्यस्समुत्पन्नं यद्वीर्यं, तदेव रेत इत्युच्यते स्वात्मनि जीवं बिभर्ति । रेतस्संसृष्टो जीवो वर्तते इत्यर्थः । एतत्प्रतिपादनं तु वैराग्यहेतुरीति द्रष्टव्यम्। **तद्यदा स्त्रियां सिंचति, अथैतज्जनयति** । तादृशं रेतः यदा पुमान् स्त्रियां सिंचति, तत उत्तरक्षणे **एतद्** गर्भरूपं जनयति। **तदस्य प्रथमं जन्म**। निषेक एव प्रथमजन्मेत्यर्थः ।

1. पुरुषो इति सुबोधिनीसम्मतः पाठः ।
2. तदेतद्रेतसः सृष्टिः ऐतरेयारण्यके श्रूयते - अथातो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोन्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो वाग्यो रेतः कर्म तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः ॥ (ऐ.आ.२-१-३) तदिदं कर्म पूर्वस्मिन् जन्मनि कृतं सदिह जन्मनि वेदशास्त्रकर्मानुष्ठान ब्रह्मोपार्जने ब्रह्मज्ञानयोग्यः पुरुषो भवति, न हि निरतिशयितसुकृतमन्तरेणेदृशं जन्म संभवति। तस्मात्पुरुषो ब्रह्मण उपासनीयस्य वेदनीयस्य च लोकः स्थानमिति तस्य महत्त्वं सिद्धमित्यर्थः। (सायणभाष्यम्)

**आ.भा.** - पूर्वं हिरण्यगर्भमारभ्य देवादिव्यष्टिसृष्टिं प्रतिपाद्य जीवात्मना तत्र परमात्मनोऽनुप्रवेश इत्यादिवर्णितम् । संप्रति याथात्म्येनात्मतत्त्वाऽपरिज्ञाननिमित्तं संसरतो जीवस्य वैराग्योत्पादनाय जन्ममरणपरम्परां दुःखप्रधानां दर्शयति श्रुतिः - **पुरुषो हवेत्यादिना** । कर्मानुसारेण तेषु लोकेषु तत्तत्कर्मोपभोगाय परिभ्राम्यन् संसारी जीव आदितः प्रथमतः **पुरुषे** - पुरुषाकारशरीरे [1]**गर्भो भवति** - गर्भस्वरूपेण तिष्ठति । गर्भशब्दार्थं विवृणोति स्वयमेव श्रुतिः - **यद्रेतः**- अन्नपरिणामभूतं रेतः वीर्यं चरमो धातुरेव गर्भ इत्येतत् । रेतसो गर्भत्वकथनं पुरुष-शरीरान्तर्गतत्वाभिप्रायेण । प्रथमत इत्यनेन स्त्रियां सेकात् पूर्वमित्यर्थो विवक्षितः । रेतः स्वरूपेण गर्भो भवतीत्येतत् । जीवस्य रेतोरूपेण भवनं स्फुटयति **तदेतदिति । तदेतत्रेतः** - अन्नपरिणामरूपं पुरुषस्य **सर्वेभ्योऽङ्गेभ्यः** शरीरावयवेभ्यो हस्तादिभ्यः **सम्भूतं** - एकत्रीभूतं **तेज** एव सारभूतः चरमधातुरेव । तद्रेत आत्मन्येव स्वस्वरूपे एव **आत्मानं देहान्तरमापत्स्यमानं जीवं** बिभर्ति धारयति । देहान्तरं समुपादित्सुः जीवः रेतसा संपृक्त एव तिष्ठति । रेतस्येव वर्तत इत्येतत् । **तद्-रेतः यदा** - यस्मिन्काले भार्याया ऋतुकाले इत्येतत् । **स्त्रियां** - भार्यायां **सिंचति** - पुमान् विसृजति तदीययोनौ । **अथ** - सेकानन्तरं **एतत्** - रेतः, **जनयति** गर्भरूपमुत्पादयति । **अस्य** - जीवस्य तदेव **प्रथमं जन्म** - रेतः सेक एव गर्भात्मना प्रथमं जननम् । प्रथमावस्थाभिव्यक्तिजनकत्वात् सेकस्य प्रथमजन्मत्वकथनम् । रेतोरूपेण भवनवर्णनं तु वैराग्यसमुत्पादनाय । बीभत्सवस्तुदर्शनस्य वैराग्यहेतुता लोकप्रसिद्धैव ॥

**सु.** - अतीतेऽध्याये परमात्मा समष्टिपुरुषप्रभृतिदेवादिव्यष्टिपुरुषान्तमिदं ससर्ज, अनुप्रविष्टश्च अयमेषु सर्वात्मतया इत्युक्तम् । अथ यथावस्थितात्मतत्त्वमविजानतो जन्मपरम्परां दुःखैकबहुलां विजानतः ततो विमुक्तिं च निरूपयन्नुपक्रमते । कर्मगत्या इतो लोकादमुं लोकममुष्मादिमं च लोकम् असकृत्पर्यटन् **अयं पुरुषः आदितः** प्रथमं **गर्भोभवति** । गर्भात्मना भवति, कोऽसौ गर्भः ? यदेतत् प्रसिद्धं **रेतः** - बीजं भाविनः शरीरस्य । भुक्तावशिष्टेन कर्मणा अमुष्मात् लोकादिमं लोकमनुपतन् वृष्ट्यादिक्रमेणान्नं सङ्गत्य तेन भुक्तेन परिणतेन द्वारा पुरुषशरीरमनुप्रविष्टो रेतः, संश्लेषमनुप्रपन्नः सन् भाविव्यक्तजन्मारम्भकगर्भस्थितिमाप्नोति ।

**तदेतत्** रेतः, कर्मगत्या वृष्ट्यादिक्रमेण समापतितजीवगर्भं रेतः सर्वावयवेभ्योऽन्नरसेभ्यः समुद्भूतं सारांशं आत्मगर्भत्वात् **आत्मानं** आत्माभिमानगोचरीभूतदेहारम्भकत्वाद्वा आत्मानं

---

1. ऋतुकाले प्रयोगादेकरात्रोषितं कलिलं भवति सप्तरात्रोषितं बुद्बुदं भवत्यर्धमासाभ्यन्तरेण पण्डो भवति मासाभ्यन्तरेण कठिनो भवति मासद्वयेन शिरः कुरुते मासत्रयेण पादप्रदेशो भवत्यथ चतुर्थे मासे अङ्गुल्यजठरकटिप्रदेशो भवति पंचमे मासे पृष्टवंशोभवति षष्ठे मासे नासाक्षिणी श्रोत्राणि भवन्ति सप्तमे मासे जीवेन संयुक्तो भवत्यष्टमे मासे सर्वसम्पूर्णो भवति ॥ (गर्भो. ४) अथ नवमे मासि सर्वलक्षणसम्पूर्णो भवति पूर्वजातीः स्मरति कृताकृतं च कर्म भवति शुभाशुभं च कर्म विन्दति ॥ जातमात्रस्तु वैष्णवेन वायुना संस्पृश्य तदा न स्मरति जन्ममरणं न च कर्म शुभाशुभम् । (गर्भो.१०)

**आत्मन्येव** स्वशरीर एव बिभर्ति। तदेतद्रेतो **यदा स्त्रियां** ऋतुमत्यां **सिंचति अथैनज्जनयति** - पिता स्वशरीरे रेतोगर्भात्मना अवस्थितं **जनयति, तदस्य** पुरुषशरीरे रेतोगर्भात्मना अवस्थितस्य पुंसः ततो निर्गमनेनाभिव्यक्तेः रेतः सेक एवायं **प्रथमं जन्म**।

[ **पुरुषस्य द्वितीयं जन्म** ]

**तत् स्त्रिया आत्मभूयं गच्छति, यथा स्वमङ्गम्, तथा। तस्मादेनां न हिनस्ति। साऽस्यैतमात्मानं अत्र गतं भावयति ॥ २ ॥**

**प्र.दी. - तदिति**। **तत्** - रेतः **स्त्रियाः** - स्त्रियामित्यर्थः, सिक्तं सत्, **आत्मभूयं गच्छति**। सेक्तृसमानरूपं गच्छति **स्वमङ्गं - यथा** - पितुरङ्गं यादृशं तादृशं रूपं गच्छति। **तस्माद्धेतोः** एनां मातरं न **हिनस्ति** - न बाधते कुक्षिस्थग्रन्थिविशेष इव साप्येतमात्मानमत्र **गतं भावयति**। सा हि माता **एतमात्मानं** अत्र गतं गर्भगतं भर्तारं **भावयति** - संरक्षति। रेतोनिषेक्तृभर्तृगतप्रेम्णा गर्भविच्छेदन-रूपाहारादिकमभक्षयन् पालयतीत्यर्थः।

**प्र. - तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गम् तथा** गर्भे निषिक्तं रेतः **तथा ; स्त्रिया यथा ;** करचरणसिरादिकमैक्यं गच्छति तद्वदेव, तदङ्गभूतमेव ततो बिभर्ति, तिष्ठतीत्यर्थः। **तस्मादेनां न हिनस्ति**। साम्यैतमात्मानमत्रगतं भावयति। अत्र इदं रेतोरूपेणानुप्रविष्टं भर्तृरूपमात्मानं **भावयति** - वर्धयति। तस्मात् सा न कैरपि बाधयितव्या, पीडनीया ॥

**आ.भा. - तत्** - स्त्रीयोनौ निषिक्तं रेतः **स्त्रिया** - यस्यां निषिक्तं तस्याः स्त्रिया **आत्मभूयं गच्छति** - आत्मभावं प्राप्नोति। अत्रात्मभावं आत्मीयपरः, **स्वमङ्गमिति** - दृष्टान्तानुसारादङ्गभावं गतं भवति। तत्र दृष्टान्तं कथयति **यथेति। यथा** - स्वात्मीयमङ्गमुदरादि। **तस्मात्** - यतोऽङ्गभावं प्राप्नोति तद्रेतः तस्मादेव हेतोः गर्भरूपेण परिणतं गुरुभूतमपि तद् **एनां** - अङ्गीभूतां स्त्रियं **न हिनस्ति** - न पीडयति। स्तनोदरादिकं गुरुभूतमप्यङ्गमङ्गिनं तदाश्रयभूतं स्त्रीशरीरं यथा न बाधते तथा गर्भाकारपरिणतं गुरुभूतं भवदपि रेतः स्त्रीयोनिस्थं स्त्रियं न बाधते इत्यभिप्रायः। **सा** - गर्भवती स्त्री **अत्रगतं** - स्वशरीरे प्रविष्टम् **अस्य** - पुरुषस्य **एतं** - रेतोरूपं पुत्ररूपमित्येतत्। आत्मानं स्वरूपं भावयति संवर्धयति परिपोषयति गर्भप्रतिकूलभोजनपानादि परित्यागमनुकूलाशनपानादिकं च कुर्वाणा।

**सु. - तत्** - योनौ सिक्तं रेतः तस्याः **स्त्रिया आत्मभूयम्** आत्मभावम्, ततोऽपृथग्भावम्, तदङ्गादविभागेन अवस्थितिमिति यावत्, **गच्छति**, **यथा**, स्वमङ्गमुदरादि तथा। तस्मादेवाङ्गाव्यतिरेकभावात् स गर्भः **एनां** - अन्तर्वत्नीं **न हिनस्ति** - न पीडयति। सा अस्य भर्तुः आत्मानमेवात्र स्वोदरे समागतं **भावयति**। विभाव्यैवं तं गर्भं समुचितान्नसेवनेन संरक्षतीति यावत् ॥

**सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति। स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म ॥ ३ ॥**

**प्र.दी. - सा भावयित्रीति।** **सा** - अन्तर्वत्नी **तं** - [1]गर्भस्थं भर्तुरात्मानं मत्वा **भावयित्री** - वर्धयित्री **भवति।** गर्भस्थजन्तुं पालयती सती भर्त्रा च **भावयितव्या च** पालयितव्या च भवति **सा स्त्री तं गर्भ-** भर्तुरात्मानं **बिभर्ति। स इति।** सः पिता **अग्र एव** पुत्रोत्पत्तेः पूर्वमेव सीमन्तादिना **भावयति।** गर्भगतं **कुमारं** पालयतीत्यर्थः। द्वितीयः अग्रशब्दः जननकालं वदति। **अधीति** अनन्तरार्थबोधकः। तथा च जननान्तरं **अधिभावयति** - पुत्रमधिकृत्य नामकरणादिकं कृत्वा यथा भावयति संरक्षति पुत्रोत्पादनं ऋणविमोक्षसाधनमिति मत्वा परिपालयतीत्यर्थः। तदा आत्मानमेव परिपालयतीत्याह, **आत्मानमेव तद्भावयतीत्यादिना। तत्** - तस्मात् कारणात् स पिता **आत्मानमेव** - स्वात्मानमेव **भावयति** - रक्षति। किमर्थम् आत्मानं पुत्ररूपेण जनयित्वा जनयिता भावयति चेत् उच्यते। **एषां लोकानां सन्तत्यै** - अविच्छेदायेत्यर्थः। विच्छिद्येरन् **इमे लोकाः** - पुत्रोत्पादनादि यदि च कुर्युरिति ते च पुत्रोत्पादनादि कर्माविच्छेदेनैव **एवं सन्ततो** हि मोहः एवं प्रबन्धरूपेण वर्तते। तस्मात् तदविच्छेदाय पुत्रोत्पत्त्यादिकं कर्तव्यं **तदस्य द्वितीयं जन्म तत्** - तस्मात्कारणात् **अस्य** - संसारिणः जीवस्य मातुः उदरात् यन्निर्गमनं तत् रेतो रूपेण निर्गमनापेक्षया एतत् द्वितीयं जन्म ॥

**प्र. - सा भावयित्री भावयितव्या भवति।** रेतोरूपेण प्रविष्टं भर्तृरूपमात्मानं वर्धयन्ती स्त्री भर्त्रादिभिः भोज्यभक्ष्यादिना पोषयितव्या भवति। उपकारकजनमनु प्रत्युपकारस्य कर्तव्यत्वादिति भावः। **तं स्त्री गर्भं बिभर्ति।** तादृशरेतोरूपेण प्रविष्टं भर्तारं गर्भरूपं बिभर्तीत्यर्थः। **सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति। सः** - पिता **अग्रे** - प्रागेव गर्भ एव कुमारम्, उत्पत्तेरूर्ध्वं (च) जातकर्मादिना, **भावयति** - पोषयति। **स यत् कुमारं जन्मनोऽग्रेऽधिभावयति, आत्मानमेव तद्भावयति। सः** - पिता जन्मनऊर्ध्वं कुमारमग्रे प्रथमतो जातकर्मादिसंस्कारैर्भावयतीति यत्, तत् स्वसंवर्धनमेव। स्वस्यैव रेतोरूपेण तत्र प्रविष्टत्वात्। *पतिर्जायां प्रविशति* (ऐ.ब्रा. ३३-१) इत्यादिश्रवणात्। किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयतीत्यत्राह **एषां लोकानां सन्तत्यै।** अविच्छेदार्थमित्यर्थः। यदि हि पुत्रोत्पादनादि न कुर्युः तर्हि इमे लोकाः विच्छिद्येरन्। **एवं सन्तता हीमे लोकाः।** एवं पुत्रोत्पादनकर्म कुर्वता इमे लोकाः **सन्तताः** - व्याप्ताः भवन्ति। **तदस्य द्वितीयं जन्म।** उपनयनादिसंस्कारलक्षणं द्वितीयं जन्म इत्यर्थः।

---

1. तथाच श्रुतिः - 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरं। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते' (ऐ.ब्रा. ३३-१) 'आत्मा वै पुत्रनामासि' इति च कौषीतकी श्रुतिः॥ तस्मात् पुत्रः स्वास्मादन्यो न भवति। स्मार्यते च-पतिर्जायां सम्प्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः॥ (मनु.स्मृ. ९ - ८) इति।

**आ.भा.** - यतस्तस्माद् भर्तुरात्मभूतस्य गर्भस्य **भावयित्री** सम्पोषणकारिणी सा स्त्री भर्त्राऽपि भावनीया पालनीया तदीप्सितवस्तुसमुपस्थापनद्वारा संमान्या भवति । भर्तुरात्मभूतगर्भपालनं कुर्वती स्त्री तदुपकारिका भवति अतस्तां प्रति प्रत्युपकारो भर्त्राऽपि तदिष्टभक्ष्यादिप्रदानद्वारा कर्तव्य एवेति भावः । **स्त्री** - गर्भिणी नारी **तं** - रेतोरूपेण प्रविष्टं भर्तुः स्वरूपभूतं गर्भमग्रे उत्पत्तेः प्राक् गर्भनिष्क्रमणात् पूर्वमित्येतत् । **बिभर्ति** - विरुद्धपरित्यागानुकूलसेवनादिना पालयति । **सोग्रे** - इत्यत्र श्रूयमाणस्य अग्रेपदस्य व्यवहितस्यापि अपकर्षेणात्र वाक्ये अन्वयः । **सः** - पिता **तं कुमारं जन्मनो** - मातुरुदरान्निष्क्रमणादनन्तरमग्रे एव जातमात्रमेव इत्येतत् । **अधिभावयति** - जातकर्मादिना संस्कारेण परिरक्षति । स पिता **कुमारं** - उत्पन्नं पुत्रं प्रथमं जातकर्मादिना ततो यज्ञोपवीतादिना संस्कारेण यदधिभावयति परिपालयति तदात्मानमेव स्वमेव भावयति स्वस्यैव रेतोरूपेण स्त्रियां प्रविष्टत्वात् । भवति च श्रुतिः*पतिर्जायां प्रविशति* (ऐ.ब्रा.३३-१) इत्यादिः स पिता पुत्ररूपेण समुत्पाद्य स्वात्मानं **भावयति,** तत्कस्य हेतोरित्याकांक्षायामाह - **एषामिति । एषां लोकानां सन्तत्यै** - सन्ततिरविच्छेदः परम्परायाः तस्यै तदर्थमित्येतत् । पुत्रोत्पादनादिपरित्यागे हि तत्परम्पराविच्छेदाल्लोकविच्छेद एव आपतेत् । तदविच्छेदे हि पुत्रपौत्रादिपरम्परया लोकाः सन्तता भवन्ति । जीवस्य द्वितीयजन्म प्रतिपादनायायं प्रपंचो दर्शितः ततः फलितं द्वितीयं जन्म दर्शयति - **तदस्येति । अस्य** - संसारिणो जीवस्य तत् पुत्रस्वरूपेण मातुरुदरतो बहिरागमनमेव **द्वितीयं जन्म** रेतोरूपेण तत्र प्रवेशः प्रथमं जन्मोक्तं तदपेक्ष्यास्य द्वितीयत्वं तदनन्तरभावित्वात् पुत्ररूपेण निष्क्रमणस्य ।

**सु.** - समुचितान्नपानादिना तं **गर्भं भावायित्री** - पोषयन्ती **सा** - भर्त्रा भावयितव्या संरक्षणीया । उक्तेन प्रकारेण **अग्रे जन्मनः** - प्राक् **गर्भं बिभर्ति** - संरक्षतीत्येतत् । अथ स पिता प्रसूतं **तं कुमारं** - जन्मनोऽग्र एव जन्मनः प्रारम्भ एव जातमात्र एवेत्येतत् , **अधिभावयति** - जातकर्मादिना संस्कारेण प्रासङ्गिकमेतत् ।

**सः** - पिता जातमात्रं **कुमारमधिभावयतीति यत् आत्मानमेव भावयति तत् ।** स्वयमेव हि जायते पुत्ररूपेण । ननु कस्मै प्रयोजनाय पिता पुत्ररूपेण आत्मानं जायायां जनयति ? उच्यते, **एषां लोकानां सन्तत्यै** - अविच्छेदाय । एवमेव हि पुत्रपौत्रादिना लोकाः **सन्तता** अविच्छिन्ना भवन्ति । एवं प्रासङ्गिकमुक्तम् , अथ प्रकृतमुच्यते - यन्मातुरुदरान्निर्गमनं **तदस्य द्वितीयं जन्म** ॥

[पुरुषस्य तृतीयं जन्म]

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥ ४ ॥**

**प्र.दी. - अस्य** - पितुः सोऽयं - पुत्रः, **आत्मा पुण्येभ्यः** - शास्त्रोक्तेभ्यः **कर्मभ्यः** - कर्मनिष्पादनार्थं प्रतिनिधीयते - पितुः स्थाने पित्रा यत्कार्यं तत्करणाय प्रतिनिधीयत इत्यर्थः। तथा च सम्प्रत्तिविद्यायां स्वकर्तव्यस्य पुत्रे स्थापनं सम्प्रत्तिरित्युच्यते। वाजसनेयके पित्रानुशिष्टः अहं ब्रह्म अहं यज्ञ (बृ.उ.३-५-१७) इत्यादि प्रतिपद्यते इति। **अथ** - अनन्तरं पुत्रे विनिवेश्य आत्मनः भारमस्य पुत्रस्येतरोयं पित्रात्मा कृतकृत्यः कर्तव्यात् [1]ऋणत्रयाद्विमुक्तः कृतकृत्यः अभूदित्यर्थः। **वयोगतः** - गतवयस्कः जीर्णदेहस्सन् **प्रैति** - मीयते **स इतः** - अस्मात् **प्रयन्नेव** - शरीरं परित्यजन्नेव [2]तृणजलूकावद्देहान्तरम् उपाददानः कर्मचितं **पुनर्जायते तत्** - अस्य मृतिं प्राप्य प्रतिपत्तव्यं यत् **तत् तृतीयं जन्म** - अत एव तस्य पितुः रेतो निर्गमनं प्रथमं जन्म। पुत्ररूपेण उत्पत्तिः द्वितीयं जन्म वार्धक्यात् देहत्यागानन्तरं लब्धं जन्म तृतीयमित्युच्यते। इति ऋषिणाप्युक्तं मन्त्रेणाप्युक्तम्।

**प्र. - सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अस्य** - पितुः पुत्ररूपः **अयमात्मा** पुण्यकर्मभ्यः कर्तव्येभ्यः प्रतिनिधीयते। पुत्रः प्रतिनिधिस्थानीयः सन् अतीते पितरि तत्कर्तव्यं कर्म सर्वं करोतीत्यर्थः। ततश्च पित्रा कस्यचित् कर्मणः अवश्यकर्तव्यस्याकरणेऽपि पुत्रकृतेनैव तत् कृतं भवतीत्यर्थः। संप्रत्तिविद्यायां तथोक्तत्वात्। **अथास्यायमितर आत्मा कृतकृत्यः।** पुत्रस्य प्रतिनिहितत्वादेव, **अस्यायमात्मा** पित्रात्मा कृतकृत्यो भवतीत्यर्थः। **वयोगतः प्रैति; स इतः प्रयन्नेव पुनर्जायते। तदस्य तृतीयं जन्म**। एवं पुत्रे निक्षिप्तभारस्य वयोगतस्य जीर्णस्य मरणानन्तरं यत् पुनर्जन्म, तत् तृतीयं जन्मेत्यर्थः। स्त्रियो रेतोरूपेण प्रवेशनं प्रथमं जन्म। ततो बहिर्निर्गमनं द्वितीयं जन्म। तस्यैव पितुः प्रेत्य पुनर्भवनं तृतीयं जन्म। यद्यप्याद्यजन्मद्वयं पुत्रगतम्; तृतीयं तु पितृगतम् तथापि पितापुत्रयोरैक्याभिप्रायेण तथोक्तिरिति द्रष्टव्यम्।

**आ.भा. - अस्य - पितुः सः** - जातकर्मादिना संस्कारेण तदनन्तरमुपवीतविवाहादि संस्कारेण चाधिभावितः **अयं** - पुत्ररूपेणावस्थितः **आत्मा** - द्वितीयं स्वरूपम्। **पुण्येभ्यः** - श्रुति-स्मृतिप्रतिपादितेभ्यः **कर्मभ्यः प्रतिधीयते** - प्रतिनिधिर्विधीयते पित्रा इति शेषः। पित्रा करणीयं शास्त्रीयं लौकिकं च कर्म कर्तुं तत्स्थाने पुत्रोऽभिषिच्यत इत्यर्थः। अत एव पित्राऽकृतमवश्यकरणीयं

1. देवर्षिपितृऋणम् - इति ऋणत्रयम्।

2. **तृणजलूकान्यायः** - तथा च श्रुतिः - तद्यथा तृणजलूका तृणस्यान्तं गत्वान्यमाक्रमाक्रम्यात्मानमुपसंहरति एवमेवायमात्मेदं शरीरं निहत्य, अविद्यां गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति॥ (बृ.उ. ६-४-३)

यथातृणजलूकतृणस्यान्तं अग्रभागं गत्वा अन्यं तृणान्तरलक्षणमाक्रमम् - आक्रम्यते इत्याक्रमः आश्रय इति यावत्। तम् आक्रम्य आश्रित्य आत्मानम् आत्मनो परावयवमुपसंहरति पूर्वतृणवियुक्तं करोति, एवमेवायं संसरन् जीवः इदं प्राक्तनं शरीरं निहत्य - तस्यैव विवरणम् अविद्यां गमयित्वेति निस्सम्बोधतामापाद्येत्यर्थः। अन्यम् अन्यशरीरलक्षणमाक्रमं आश्रयमाक्रम्य स्वात्मानं पूर्वस्माच्छरीरादुपसंहरति पूर्वशरीरं त्यजतीत्यर्थः॥ इति रङ्गरामानुजभाष्यम्।

**कर्म यदि पुत्रेण क्रियते तत् पित्रैव कृतं मन्यते लोकैः। श्रुतिरपि सम्प्रत्तिविद्यायामेवं प्रतिपादयति तद्यथा - अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स पुत्रः प्रत्याह - अहं ब्रह्मा अहं यज्ञोऽहं लोक इति। (बृ.उ.३-५-१७) यदा पिता स्वकीयं परलोकगमनं निश्चिनोति तदा पुत्रं वदति मत्कर्तव्यानि वेदाध्ययनयज्ञलोकसम्पादनानि त्वयैवातःपरं कार्याणीति। पुत्रस्तु सर्वमपि भवत्करणीयमहं करिष्य इत्युत्तरयतीति सम्प्रत्तिविद्याभावार्थः। एतावता प्रबन्धेन प्रथमद्वितीयजन्मनोस्तदनन्तरं पितृसम्पाद्यकर्मकरणमालक्ष्य दुःखबहुलत्वं प्रतिपादितं तच्चिन्तनेन [1]वैराग्यसिद्धिर्यथा स्यादित्येतदर्थम्।**

अथ जन्मद्वयकथनानन्तरं तृतीयं जन्मोच्यत इत्यभिसबन्धः। अस्य पुत्रस्य इतरो द्वितीयोऽयमात्मा। पितृस्वरूपः ; पितापुत्रयोरैक्यमाश्रित्यास्येतर आत्मेति कथनम्। **कृतकृत्यः** कर्तव्यकर्मणां करणाय पुत्रस्य प्रतिनिधित्वकरणात् सर्वभारस्य तत्रारोपेण निश्चिन्तो भूत्वा अकृतमपि कृत्यं कृतमेव मन्वान इत्येतत्। **वयोगतो** - जीर्णशरीरः **प्रैति** - समुपात्तं शरीरं परित्यजति म्रियत इत्येतत्। तदा **सः** - पिता **इतः** - अस्माच्छरीरात् निर्गच्छन्नेव **पुनर्जायते** - शरीरान्तरं गृह्णाति। **अस्य** - संसरतो जीवस्य **तत् प्रेत्य** - पुनर्भवनरूपं **तृतीयं जन्म**, तृणजलौकन्यायेन अपरं शरीरं परिगृह्णन्नेव पूर्वं शरीरं त्यजति, नात्र विलम्बो भवति इत्यभिप्रायः प्रयन्नेव पुनर्जायते इत्यस्य। अत्र यद्यपि पुत्रस्यैव तृतीयं जन्म दर्शयितुमुचितं तस्यैव प्रथमद्वितीयजन्मनी यतः पूर्वं प्रदर्शिते तथापि पितुरपि तृतीयजन्मकथने पुत्रे तस्योक्तत्वसंभवः पुत्रस्यापि स्वपुत्रे भारनिक्षेपपूर्वकशरीरत्यागेनोत्तरपरिग्रहस्यावश्यकर्तव्यत्वमेकत्रोक्तमन्यत्रापि अतिदिश्यते इति न्यायात्। पितापुत्रयोरैकात्म्यमत्र विवक्षितमिति कथितमेव पूर्वम्॥

**सु.** - अस्मिन् संसरतः पुंसोऽवर्जनीयदुःसहदुःखाभिघातव्यंजके गर्भजन्मनी निरूपिते। तत्र यः प्रथमो गर्भश्चरमधातुः **स हि** मलमयस्यैव सारः कश्चिदस्पृश्यः, तद्भावेन पितुः शरीरे स्थितिः; अथ ततो विनिःसृत्य मातुरुदरे मलमूत्रमये शुक्रशोणितसंश्लेषलक्षणगर्भात्मना स्थितिः ; ततो योनिमार्गेण दुःसहवेदनापूर्वकं निःसरणं चेति गर्भजन्मनी निरूप्यमाणे दुःखैकास्पदतया कस्य न स्यातामुद्वेगाय। अथ कथमपि मातुरुदरात् निःसृतस्यापि यावज्जीवं नास्मिन् लोके सुखरूपा स्थितिः, यदनेन पुत्रभावं प्राप्तेन पितुः प्रत्यनन्तरेण भूत्वा तेन कृतानि कर्माणि क्लेशैकफलकान्यवश्यमनुष्ठेयानि, इत्येतदवबोधयितुं प्रवर्तते - **सोऽस्यायमि**त्यादिना। **सोऽयं** - जातः कुमारः पुत्ररूपः पितुरेव **आत्मा पुण्येभ्यः** - विहितेभ्यः - विहितानि कर्माणि कर्तुं **प्रतिधीयते** - पितुः स्थाने प्रतिनिधीयते। श्रूयते चान्यत्र *अथातः सम्प्रत्तिः यदा प्रेष्यन्मन्यतेऽथपुत्रमाह त्वं ब्रह्म त्वं यज्ञः त्वं लोक इति स पुत्रः प्रत्याह अहं ब्रह्माहं यज्ञोऽहं लोक इति* (बृ.उ.३-५-१७) इति।

1. तदुक्तं मुक्तिकोपनिषदि 'स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान्। विरागकारणं तस्य किमन्यदुपदिश्यते'॥ (२-६६) इति

**अथास्य** कुमारस्य **इतर आत्माऽयं** पिता, पितापुत्रयोरैकात्म्यविवक्षया इतर आत्मेत्युक्तिः, पुत्रे आत्मीयं कर्मभरं विन्यस्य **कृतकृत्यः** सन्, एतेन पित्रा आहितः सर्वकर्मभरो यावज्जीवं वहनीय इति गम्यते। **वयोगतः** - समधिकं वयः प्राप्तः ; गतवया इति यावत्, **प्रैति; स इतः प्रयन्नेव - इतः**- शरीराद्विमुच्यमान एव पुनर्जायते - यथाकर्म देहान्तरयोगं प्राप्नोति। **तदस्य तृतीयं जन्म**, मरणं विचार्यमाणं देहाद्देहान्तरयोगलक्षणमेवेति तृतीयं जन्मेति ॥

ननु पितुः तत्तृतीयं जन्म वक्तव्यम्। सत्यम्। अथापि पितरि निर्दिष्टं न्यायसाम्यात् कुमारेऽप्युक्तप्रायम्। ननु साक्षादेव निरूपणं समुचितम् सत्यम्। अथापि सम्प्रत्तिप्रसङ्गेन अव्यवहितमन्त्रे पिता प्रकृत इति तस्य तन्निरूपितम्। ऐकात्म्यविवक्षया चास्मिन्नपि तदुपपादित-प्रायम्। एवमवर्जनीयजन्मचक्रपरिभ्रमणे संसारे संसरतोऽविदुषो नोपरतिर्दुःखान्वयस्य।

[**एतद्विषये वामदेवसम्मतिः**]

**तदुक्तमृषिणा**

[1]**गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम् इति। गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥**

**प्र.दी.** - [2]**गर्भे इति। गर्भे** - मातृगर्भे अनेकजन्मान्तरभावनापरिपाकवशात् **एषां देवानां** वागाद्यग्न्यादीनां **जनिमानि** - जन्मानि **विश्वा** - विश्वानि सर्वाणि - **अन्ववेदं अहं** - अहो अनुबुद्धवानस्मीत्याश्चर्यवान् भवति। **शतं** - अनेकाः बह्व्यः **मा** - मां **पुरः** - शरीराणि **आयसीः** - लोहमय्य इवाभेद्याः तनवः शरीराणि **अरक्षन्** - रक्षणमकुर्वन् **अधः** - अधोसंसारपाशनिर्गमनात् अधोधः पश्यन् **श्येन** इव जालं भित्वा **जवसा** - आत्मज्ञानकृतसामर्थ्येन **निरदीयं** - निर्गतोऽस्मि। **एतत् गर्भशयानो वामदेव ऋषिः एवमुवाच।**

**प्र.** - तदुक्तमृषिणा। तदेतद्वस्तु ऋषिणा मन्त्रेणाप्युक्तमित्यर्थः। **गर्भे - निरदीयमिति।** अहं गर्भ एव **सन्** वर्तमानः **एषां देवानां विश्वा** विश्वानि, समस्तानि **जनिमानि** - जननानि, **अन्ववेदम्**-अन्वभूवम्। **नु** शब्दो वितर्के। **मा** - मां **आयसीःपुरः** - अयोविकारवन्निर्गमनप्रतिबन्धकानि शरीररूपाणि पुराणि शतसंख्याकानि **अरक्षन्** संसारकारागृहनिर्गमनप्रतिबन्धकतया स्थितानीत्यर्थः। पश्चात्तु देशिकोपदेशजनितोपायज्ञानेन, **श्येनः** यथा **जवात्** निर्गच्छति तथा, निर्गतोऽस्मीति मन्त्रार्थः। **गर्भ एवैतच्छयानो वामदेव एवमुवाच।** अनेन प्रकारेण तद् (एतद्?) वाक्यं उवाचेत्यर्थः।

---

1. ऋ.सं. ४-३-२७-१
2. तदुक्तृषिणा इत्यस्य प्रतिपदार्थदिपिका पूर्वमन्त्रप्रतिपदार्थान्तिमभागे वर्तते।

**आ.भा.** - तदेतद् वस्तु **ऋषिणा** - मन्त्रेण वक्ष्यमाणेन ऋषिपदमृषिदृष्टमन्त्रस्योपलक्षकम्। तथा परमर्षिवामदेवदृष्टेन मन्त्रेणापि अयमर्थ उक्त इत्यर्थः। **अहं** - वामदेवः ऋषिः **गर्भेसन्** - गर्भगत एव **एषां देवानां** अग्न्यादीनां **विश्वा** - विश्वानि समग्राणि **जनिमानि** - जन्मानि **अन्ववेदं** - पूर्वजन्मसमुद्भूतभावनाप्रकर्षमाहात्म्यादनुभूतवानस्मि। **नु** शब्दो वितर्कद्योतनाय। **शतं** - शतसंख्याका अनन्ता इत्येतत्। **आयसीः**- अयस इमा आयसीर्लोहनिर्मिता इव पुरः पुरसादृश्यात् **पुरः** - शरीराणि **अरक्षन्** - रक्षितवत्यः। संसारबन्धनिर्गमप्रतिबन्धम् अकुर्वन् इत्येतत्। यथा संसारपाशादहं निर्गतो भवेयं तथा निगडितं कृतवत्य इति भावः। तदपि न शुभे स्थाने किन्तु निकृष्ट एवेत्याह - अधोऽधोयोनिषु यत्र आत्मतत्त्वज्ञानप्रसङ्ग एव नोद्भवेत् तादृशीषु योनिषु बद्ध आसमिति। आयसी इत्यत्र प्रथमार्थे द्वितीया विभक्तिव्यत्ययः छान्दसः।

परन्तु सम्प्रति परमकृपालुगुरूपदेशजनितात्मतत्त्वपरिज्ञानसामर्थ्यजन्मना **जवसा** - वेगेन **श्येनः** श्येन इव **निरदीयं** - निर्गतोऽस्मि। श्येनः यथा वेगेन जालं विदार्य बन्धनतो निर्गच्छति तथाऽहमप्यात्मज्ञानसामर्थ्येन वेगतः संसारबन्धनं विभिद्य निर्गतो मुक्तोऽभवमिति भावः। इति शब्दो मन्त्रस्वरूपनिर्देशकः। **गर्भे** मातुर्गर्भाशये **एव शयानो** वर्तमानो **वामदेवो** वामदेवनामर्षिरेवमनेन प्रकारेण उक्तमन्त्ररूपं वाक्यमित्येतदुवाच॥

**सु.**- एवमविदुषः जन्मचक्रपरिभ्रमणमनर्थशताकुलम् अशुभैकास्पदमुक्तं वैराग्याय। अथ विद्यायां प्रवर्तनाय विदुषो विमुक्तिं ज्ञापयन्ती महर्षेरात्मनिष्ठस्य वचनमनुवदति - **तदुक्त**मित्यादिना। **अहं गर्भे सन्नेव एषां देवानां** - अग्न्यादीनां सकरणानां **जनिमानि** - जन्मानि, यानि चान्येषां लोकानां गवादीनां प्राणिनाम् अन्नानां च जन्मानि **विश्वा** - विश्वानि, तानि अन्ववेदिषं यथावत्। यत आत्मनः येन प्रकारेण यानि यानि लोकलोकपालादीनि उत्पन्नानि सर्वं तदहं ज्ञातवान्। एतद्वेदनतः प्राक् **मां शतम्**; बह्व्यः आयस्यः लोहमय्यः, अभेद्याः, **पुरः** - पुरवदनेकभोगोपकरणसम्पन्ना देहाः **अरक्षन्** - निर्गमादात्यन्तिकात्। स्वस्मादपसर्पणं यथा न घटेत तथा स्थापितवत्यः। तत्रापि **अध**- एव अधोयोनिष्वेव यथा लेशतोपि निर्गमनप्रसङ्गो न स्यात्तथेत्येतत्। आयसीरिति विभक्तिव्यत्ययश्छान्दसः। इदानीं तु वेदनानन्तरं अंजसा वेदनजनितवीर्यातिशयेन शीघ्रं **श्येन** इव जालं विदीर्य **निरदीयम्** - निर्गतवान् इति। **गर्भ एव शयानो वामदेवो** महर्षिः **एवमुवाच**॥

[मुक्तिस्वरूपफलम्]

**स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्। समभवत्॥६॥**

**इति चतुर्थः खण्डः**

**प्र.दी.-स एवं विद्वानिति। सः**-वामदेवऋषिः **एवं विद्वान्** यदुक्तमात्मानमेवं विद्वान् **अस्माच्छरीरभेदात्** परमात्मज्ञानामृतोपयोगजनितसामर्थ्यात् जनितशरीरविनाशादित्यर्थः।

एतद्देहत्यागानन्तरं **ऊर्ध्व** - वृक्षं त्वक्त्वा पक्षीव अर्चिरादिमार्गद्वारा **उत्क्रम्य** - ऊर्ध्वलोकं गत्वा इह लोके वर्तमानदशायां **सर्वान् कामान्** लब्ध्वा अमुष्मिन् स्वर्गे लोके पारमार्थिकस्वर्गशब्दवाच्ये श्रीवैकुण्ठलोके विद्यमानस्सन् तेन भगवता साकं **सर्वान् कामानाप्त्वा** लब्ध्वा **अमृतस्समभवत्** - जन्मजरामरणरहितो भवति। *सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता* (तै.आन. १-२) इति श्रुत्यन्तरसिद्धार्थो विवृतः। द्विरुक्तिः पुनरावृत्तिनिवृत्तिबोधिका। *न च पुनरावर्तते न च पुनरावर्तते* (छां.उ.८-१५-१) इति श्रुत्यन्तरप्रसिद्धेयं *अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्* (ब्र.सू. ४-४-२२)इति श्रुत्यन्तरप्रसिद्धार्थ एव व्यासार्यैः सूत्रितः।

**इति चतुर्थखण्डप्रतिपदार्थदीपिका**

**प्र. - स एवं विद्वान् - अमृतः समभवत्** एवं संसरन्नेव पूर्वं स्थितो वामदेवः ब्रह्मविज्ञानसंपन्नः सन् अस्मात् शरीरसकाशा (विनाशा?) दूर्ध्वमुत्क्रम्य अर्चिरादिमार्गेण भगवल्लोके **सर्वान् कामानाप्त्वा** - अपहतपाप्मत्वादीन् कल्याणगुणान् अनुभवन् मुक्तोभवदित्यर्थः। मुखं व्यादाय स्वपितीतिवत् आप्त्वेति सर्वकामानुभवस्य अमृतत्वप्राप्तेश्च पौर्वापर्यमविवक्षितमिति द्रष्टव्यम्। अत्र **स एवं विद्वा**नित्युक्त्वा इतरे सर्वे संसारघटीयन्त्रपरिवर्तमाना देहात्मभ्रमनिमग्नाः पुत्रपौत्रादीनपि आत्मानं मन्यमानाः शोचन्तीति भावः॥

**इति चतुर्थखण्डप्रकाशिका**

**आ.भा.** - परमात्मतत्त्वज्ञानव्यभिचरेण अमृतत्वसाधनमिति दर्शयितुं श्रुतिः स्वयमाह - **स एवमिति**। **सः** - वामदेवः ऋषिरेवं **विद्वान्** - लोकलोकपालादिसर्जकत्वेन सर्वस्य प्रपंचस्य प्रकारितया च परमात्मानं जानन् साक्षात्कुर्वन्नित्येतत्। **अस्माच्छरीरभेदादूर्ध्वं** प्रारब्धकर्मनाशे सति वर्तमानशरीरपातादनन्तरमुत्क्रम्य मूर्धन्यया नाड्या शरीरान्निष्क्रम्य अर्चिरादिना देवपथा **अमुष्मिन् स्वर्गे लोके** - अप्राकृते देशे साकेतशब्दाभिलप्ये लोके भगवद्धाम्नि दुःखगन्धशून्ये गत्वा तत्र **सर्वान् कामान्** - मुक्तात्मभिः काम्यमानान् अपहतपाप्मत्वादिकान् कल्याणगुणान् **आप्त्वा** परमात्मना सहैव लब्ध्वा तदनुभवं कुर्वाण इत्येतत्। **अमृतः समभवत्** - मुक्तो जातः। एतेन आत्मतत्त्वज्ञानविधुरा पुत्रादिष्वेव आत्मभावं मन्यमानाः संसारमहार्णवे पतिताः परिशोचन्तीत्यर्थोऽभिव्यज्यते सोऽपि वैराग्योत्पादहेतुर्भवति॥

**इति चतुर्थखण्ड आनन्दभाष्यम्**

**सु.** - एवं वामदेवस्य वचनमनूद्य श्रुतिः स्वयमाह - **स इति**। **सः** - वामदेवः **एवं विद्वान्** - लोकलोकपालादीनां सृष्टिं स्रष्टारं चात्मानं **विद्वान्** जानन् साक्षात्कुर्वन् **अस्माच्छरीरभेदादूर्ध्वं** - प्रारब्धशरीरविनाशादनन्तरं उत्क्रम्यार्चिरादिना **अमुष्मिन् स्वर्गे लोके** - अप्राकृते दुःखासंभिन्ने लोकविशेषे सर्वान् कामान् तेनात्मना सह प्राप्य **अमृतः** - अपुनरावृत्तोऽत एव जननमरणादिरहितः आनन्दमयात्मामृतानुभवैकनिष्ठः **समभवत्**।

**इति चतुर्थखण्डसुबोधिनी**

* * *

## पंचमः खण्डः

[आत्मस्वरूपनिर्धारणम्]

**[1]कोऽयमात्मेति वयमुपास्महे कतरस्स आत्मा। येन वा रूपं पश्यति येन वा शब्दं शृणोति, येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चेतत् ॥ १ ॥**

**प्र.दी.** - वामदेवाद्याचार्यपरम्पराप्राप्तब्रह्मविद्यां स्तुवन्तः ब्रह्मविदः ब्राह्मणाः अन्योन्यं पृच्छन्ति यं नु आत्मानं अयं आत्मेति साक्षात् वयमुपास्महे - स आत्मा क इति यं आत्मानमुपास्यमानः वामदेवः अमृतत्वं प्राप्तः तमेव वयमुपास्महे। स आत्मा कतरः *अनेन जीवेनात्मनानुप्रविश्ये* ति (छां.उ.६-३-२) *ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ* (कठ.उ.३-१) इति हृदयगुहा-प्रविष्टजीवेश्वरमध्ये क उपास्य इति जिज्ञासायां अत्र कतर आत्मेति प्रश्ने जीवेश्वरौ अस्मिन् देहे वर्तत इति - रूपादिदर्शनकर्ता एकः जीवः अस्तीति तदन्तर्यामी एकः दर्शयिता ईश्वरः अस्तीति गम्यते। चक्षुरादीन्द्रियैः रूपादिदर्शनकर्ता जीव एव न तु परमात्मा स्वाद्वस्वादु भोक्तृत्वं जीवधर्मः, न तु ईश्वरधर्मः। अतः परमात्मैव उपास्य इत्याह [2]येन रूपं पश्यतीत्यादिना। अयं देहाधिष्ठाता जीवः **येन** चक्षुषा साधनेन उपकरणेन **रूपं** - पीतनीलादिकं पश्यति। **येन वा** - श्रोत्रेण साधनेन शब्दं शृणोति - वा शब्द एवकारार्थकः। **येन वा गन्धानाजिघ्रति। येन** - वागिन्द्रियेण गौरयमश्व इत्यादि नामात्मिकां वाचं व्याकरोति। **येन** - जिह्वेन्द्रियेण स्वादु चास्वादु च विजानाति। सः एतादृश-ज्ञानेन्द्रियकर्मेन्द्रियविशिष्टः आत्मा जीव एकः अस्मिन् देहे उपासक इत्युच्यते। अन्यः आत्मा परमात्मा उपासनार्हः। यदेतद्धृदयं मनश्चैतत्। सर्वप्रजानां रेतः हृदयस्थं ततो मनः मनसश्चन्द्रमाः इति तदैव तत् हृदयं मनश्च एकमेव तन्मनः वृत्तिभेदात् अनेकधा भवति। तेनान्तःकरणसहितेन चक्षुषा रूपादिकं पश्यति जीवः। अन्तःकरणसहितेन सर्वेन्द्रियैः सर्वं पश्यतीत्यर्थः। सर्वं विजानतः एतन्मनसः नामधेयान्युच्यन्ते।

**प्र.** - कोयमात्मेति वयमुपास्महे [3]कतरस्स आत्मा। पूर्वं ब्रह्मविदः सर्वे मिलित्वा अस्माकमुपास्यभूत आत्मा कः सः कीदृग्गुणविशिष्ट इति मीमांसांचक्रुरित्यर्थः। अयं भावः -

1. तत्र 'आत्मा वै' इदमित्याद्यध्यायेन सामान्यतस्तत्त्वमवगत्य 'पुरुषे ह वै' इत्यध्यायोक्तजन्मक्लेशविचारेण परं वैराग्यं प्राप्तानां जिज्ञासूनां विचारं दर्शयति - कोयमात्मेति। इति सायणभाष्यम् ॥

2. **कठवल्लीषु** - 'येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्। एतेनैव विजानाति। इत्याम्नायते ॥ श्रोत्रेन्द्रियग्राहकमभिप्रेत्य तलवकारेचाम्नायते ॥ "श्रोत्रस्य श्रोत्रं मनसो मनो वाचो ह वाक् स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः" (केन.उ.१-२) इति।

3. **बहूनां** मध्ये कस्यात्मत्वमिति जिज्ञासासत्त्वात् कतर इति कतम इत्यर्थकम्। कतम इति प्रयोक्तव्ये कतर इति प्रयोगस्तु, 'देहेन्द्रियाद्यतिरिक्तवास्तवात्मनिर्धारणानन्तरमपि स आत्मा जीवात्मा परमात्मा वा इति द्वयोरेकतरजिज्ञासा भवतीति सूचनाय। अथवा कतर इति कीदृग्गुणविशिष्ट इत्यर्थकं भाष्याभिमतम्। (इति भाष्यपरिष्कारः) वस्तुतस्तु संशयस्य द्विकोटिकत्वनियमात् कतर इति निर्देशः स्वरसः।

देहेन्द्रियमनःप्राणधीजीवपरमात्मानः आत्मशब्दप्रयोगविषयाः। एषां मध्ये उपास्य आत्मा क इति मीमांसांचक्रुरिति। एवं मीमांसित्वा जातनिश्चयप्रकारमाह - **येन वा रूपं पश्यति येन वा स्वादु चास्वादु च विजानाति**। अनेन चक्षुश्श्रोत्रघ्राणवाग्रसनेन्द्रियोपलक्षितानि सर्वाणि बाह्येन्द्रियाणि उक्तानि भवन्ति। येन वा पश्यति इन्द्रियाणीति पर्यवसितोऽर्थः। **यदेतद्धृदयं मनश्च**। अनेन अन्तरिन्द्रियमुक्तं भवति। हृदयं मन इत्यवस्था अन्तरिन्द्रियस्य भेदः।

**आ.भा.** - आत्मा वा इदमेक एवाग्र आसीदित्यत्रोपक्रान्त आत्मैव लोकलोकपालादिकस्य सर्वस्य प्रपंचस्य स्रष्टा, स एव जीवेनात्मनाऽनु प्रविष्टः देवमनुष्यादिषु तद्विज्ञानादेव वामदेवोऽमृतः समभवत्। अन्योऽपि तद्विज्ञानात् अमृतो भवितुमर्हति। न च तद्विज्ञानादन्यदमृतत्वसाधनम् इत्येतत्सर्वमुक्तं तस्मात् स एवामृतत्वकामैः समुपास्य इत्यर्थादागतं भवति। तस्यैव आत्मनः स्वरूपं विनिश्चेतुं पूर्वं मुमुक्षवः ब्रह्मविविदिषवः सम्भूय विचारमकुर्वन् तस्यैव विचारस्य स्वरूपं प्रश्नप्रतिवचनात्मकं दर्शयति सम्प्रति श्रुतिः - **कोयमात्मेत्यादि**। आत्मशब्दप्रयोगो भवति देहेन्द्रियमनःप्राणेषु बुद्धौ जीवात्मनि परमात्मनि च। तेषु मध्ये यं **वयमुपास्महे** - समुपासितुं प्रवृत्ताःस्म **स आत्मा कतरः** - कतम इत्यर्थः। स चात्मा कः किंस्वरूप इति प्रश्नः परिषदि ब्रह्मजिज्ञासूनां मुमुक्षूणाम् अभूत्। अस्मिन् प्रश्ने मीमांसमानेषु तेषु यो निर्णयो जातस्तमेव वर्णयितुमग्रेतनो ग्रन्थः प्रवर्तते।

योऽयं द्रष्टा घ्राता वक्ता रसयिता विज्ञानस्वरूपो जीवात्मा यच्छरीरकः सन् परमात्मा अनुप्रविशति स येन करणभूतेन पश्यति घटपटादिकं, येन करणभूतेन शृणोति शब्दान्, येन करणेन गन्धान् गृहणाति, येन च करणेन वाचं व्याकरोति उच्चारयति, येन **स्वादु** - सुरसम् **अस्वादु** - विरसम् आम्रपिचुमन्दादिकं **विजानाति** - तदीयरसपरिज्ञानं कुरुत इत्येतत्। तानि करणानि चक्षुश्श्रोत्र-घ्राणवाग्रसनेन्द्रियाणि तेषु अन्यतममपि वा नात्मा भवितुमर्हति तेषां करणत्वेन जडतया चात्मत्वासम्भवात्, किन्तु तद्भिन्न एव कश्चिदात्मेति निश्चयो विचारणायां कृतायां तेषां जातः। एवं बाह्येन्द्रियाणाम् आत्मशब्देन न ग्रहणमित्युक्त्वा अन्तरिन्द्रियस्यापि तद् वक्तुमाह 'यदेतद्धृदयं मनसश्चैतत्'। हृदयशब्देन अध्यवसायात्मिकाया बुद्धेः मनःशब्देन सङ्कल्पात्मकस्य मनसश्च ग्रहणम्। यद्यप्यन्तःकरणमेकमेव तथाप्यवस्थाभेदात् भिन्नतयेह कथितम्। यदेतद् हृदयमेतन्मनश्च इत्युभयमपि अन्तःकरणमत एव आत्मा भवितुमर्हति। करणत्वादेव जडत्वाच्च तस्मादेतस्मादपि भिन्न एव अस्माकमुपास्य आत्मेति निश्चयोऽभवत् तेषाम्।

**सु.** - आत्मैवास्य सर्वस्य देवमनुष्यादिप्राणिवर्गस्य स्रष्टा, स एवेममनुप्रविष्टः, तमविदुषां गर्भजन्मादिक्लेशः विदुषां, तु निःश्रेयसमित्युक्तम्। अथ तस्य आत्मनः स्वरूपं वक्तुमुपक्रमते विचारमुखेन विनिर्णयमात्मविदाम् अनुवदन्ती श्रुतिरधुना। केवलकर्मसु श्रेयोऽपश्यन्तः श्रेयःकामा

आत्मोपासने प्रवृत्ताः मिथो विचारेण आत्मस्वरूपं निश्चिन्वन्तो विचारमिमम् अकुर्वन् - **कोऽयमात्मेति** । आत्मोपासनात् नान्यत् श्रेयः अयमात्मा कः इति ।

ननु अनुदिनमनुभूयते सर्वैरेवाहमहमित्यात्मा, सत्यम् , न तेन तस्य विनिर्णयः शरीरमिदं यो व्याप्नोति चेतयंस्तेन ह्यात्मना भाव्यम् । इहान्तः प्राणः करणं चक्षुरादि द्रष्टा च विज्ञानमयः सन्निहितः, तेष्वेषु कोऽयम् , अथान्य एव कश्चित् सन्निधत्ते , तद्भवति विचारः । वयं यमुपास्महे- (सामीप्याद्वर्तमानप्रयोगः) उपासितुं प्रवृत्ताःस्म, स कतरः ॥

विचार्य अथैवं निर्णयमकुर्वन् - यः - **पश्यति शृणोति जिघ्रति** सोऽयं द्रष्टा श्रोता घ्राता विज्ञानात्मा जीवः सुखदुःखशतसमाकुलः नोपास्य आत्मा भवितुमर्हति । कर्मनियन्त्रितश्चायं न प्रभवति स्वतो द्रष्टुं श्रोतुं वक्तुं वा, दृष्टिश्च दर्शनादिलक्षणा द्रष्टुरस्य धर्म इति सुतरां न तथा, चक्षुरादीनि तु द्रष्टुर्दृष्टौ द्वाराणि केवलं, अन्यान्यानि चेति नात्रात्मता, तत् द्रष्टुरस्य दृष्टौ यः साधकतमम् - अतिशयितं साधनम् , येनैव एकेनायं सर्वो द्रष्टा **पश्यति** येनैवैकेनायं सर्वः श्रोता **शृणोति,** येनैवैकेनायं, सर्वो घ्राता **जिघ्रति गन्धान् ,** येनैवैकेन सर्वो व्याकर्ता **वाचं व्याकरोति,** येनैवैकेन सर्वो रसयिता स्वादु चास्वादु च विजानाति स सर्वस्यात्मा चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं वाचो वाक् समुपास्य आत्मेति । श्रूयते चान्यत्र *येन रूपं रसं गन्धं शब्दान्स्पर्शश्च मैथुनान् । एतेनैव विजानाति* (कठ.उ.४-३) इति ॥

ननु यद्यपि चक्षुरादीन्यननुगतानि, अथापि हृदयमेकमनुगतम् , तेनैव पश्यति, तेनैव शृणोति जिघ्रति, वदति च । अन्यमनुगतं दर्शनादौ द्वारं भवति यदेतद्धृदयम् , अथ एतन्मनस्तु मननसाधनमिन्द्रियं तु तत् , दर्शनादौ चक्षुरादिवदसाधारणं द्वारमात्रं तु तत् करणसाजात्यात् । इयानेव इतरेभ्यो विशेषः, चक्षुरादिषु प्रविशतो द्रष्टुः प्रथमं द्वारमनुगतमिति । सर्वतः समतिशयितं दर्शनादिसाधनं तु अन्यदेवास्मात् यन्मनसो मनः ।

यद्वा यदेतदान्तरकरणं **हृदयं मन** इति तदप्येनदेव यश्चक्षुरादीनां चक्षुरादितया दर्शने साधकतमतयोक्त एतदात्मकमेव । येन वा पश्यतीत्यस्यैवं वा भावः । अस्मिन् शरीरे ये प्राणाः चक्षुरादयो यश्च मुख्यः प्राणश्च न ते भवन्त्यात्मानः, जडा ह्यते, द्वावात्मानौ तु हृदयगुहां प्रविष्टौ, तत्रैकः क्षेत्रज्ञो द्रष्टा श्रोता, घ्राता, रसयिता, विज्ञानात्मा, अपरस्तु तस्य आत्मनोप्यात्मा, सर्वज्ञः, सर्वशक्तिः , सर्वान्तरात्मा, तत्र द्रष्टेति प्रसिद्धोप्येष येनात्मनाधिष्ठितः पश्यति, शृणोति, जिघ्रति, वक्ति, रसयति, द्रष्टुं श्रोतुम् आघ्रातुं वक्तुं च प्रभवतीत्येतत् ; सोयमन्तरात्मोपास्य इत्येतत् । एतेन मुख्यं द्रष्टृत्वं परमात्मन्यन्येवेति ज्ञापितं भवति । अदृष्टो द्रष्टा अश्रुतः श्रोता सोयमन्तरात्मा । अथ मुख्यदृशिकारणतामप्यस्मिन्नेव सङ्गमयति - **यदेतदित्यनेन** । एष द्रष्टा हृदयेन मनसा च एकीभूतेन चक्षुषा पश्यति श्रोत्रेण शृणोति वाचा वदतीति लोकतो गम्यते नाम । अथापि **यदेतद्धृदयं**

**मनश्च** (मनस एवावस्थाभेदात् हृदयस्य पृथग्ग्रहणम्) चकारात् तदुभयाधिष्ठितं बाह्यं चक्षुरादि-गृह्यते, तदेतत्सर्वमेतदेव - एतदात्मकमेव । करणस्याप्यन्तरात्मतया करणमपि मुख्यं तदेव । श्रूयते चात एव *चक्षुषश्चक्षुः* (केन.उ.१-२) इति ॥

**[सर्वेषां करणानां प्रज्ञानरूपब्रह्मवश्यता]**

**संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिः धृतिर्मतिः मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति । सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥**

**प्र.दी.** - [1]**संज्ञानं** - संज्ञप्तिः चैतन्यधर्मः, **आज्ञानं** - आज्ञप्तिः, ईश्वरधर्मः, **विज्ञानं** - शास्त्रपरिज्ञानं **प्रज्ञानं** - प्रज्ञप्तिः, प्राज्ञता, [2]मेधा - ग्रन्थधारणसामर्थ्यं, **दृष्टिः** - इन्द्रियद्वारा सर्वविषयोपलब्धिः, **धृतिः** - धारणं, अवसन्नानां शरीरेन्द्रियादीनां यया उत्तम्भनं भवति धृत्या शरीरमुद्वहन्तीति वदन्ति । **मतिः** - मननं, [3]**मनीषा** - तत्र स्वातन्त्र्यं, [4]**जूतिः** - चेतसो रुजादिदुःखित्व-भावः, **स्मृतिः** - स्मरणं, **सङ्कल्पः** - शुक्लकृष्णादिरूपेण रूपाणां सङ्कल्पनं, **क्रतुः** - अध्यवसायः, प्राणनादिजीवनक्रियानिमित्ता वृत्तिः, **कामः** - असन्निहितवस्तुषु स्पृहः, **वशः** - स्त्रीसम्पर्काद्यभिलाषया तत्स्वाधीनता सर्वाण्येव एतानि पूर्वोक्तानि नामानि **प्रज्ञानस्य** - मनसो वृत्तिविशेषात् **नामधेयानि भवन्ति ।**

**प्र.** - एतत् **संज्ञानमाज्ञानं** - **वश** इति । एते सर्वे धर्मभूतज्ञानावस्थाविशेषाः । **संज्ञानं** - एकत्वेन ज्ञानम् । **अज्ञानम्** - ईषद्ज्ञानम् । **विज्ञानं** - विभिन्नतया ज्ञानम् । **प्रज्ञानं** - प्रकृष्टतया ज्ञानम् । **मेधा** - धारणवती बुद्धिः । **दृष्टिः** - प्रत्यक्षम् । **धृतिः** निश्चयरूपज्ञानविशेषः । **मतिः** - मननम् । **मनीषा** - स्वातन्त्र्यात्मकबुद्धिविशेषः । **जूतिः** - प्रीतिः **क्रतुः** - उपासनम् । [5]**असुः** - प्राणः । **कामः** - सन्निहितविषयाकाङ्क्षा । **वशः** - इच्छा ।

**सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ।** प्रज्ञानशब्दितज्ञानस्वरूपस्य ब्रह्मणः, उक्तानि बाह्यान्तरि (रे?)न्द्रियप्राणज्ञानानि नामधेयानि तच्छरीराणि भवन्तीत्यर्थः । तस्यैव रूपभेदाः इति यावत् । यथा नामधेयानीमानि प्रतिपत्तिप्रयोजकतया तदेकशेषभूतानि भवन्ति, तथेत्यर्थः ।

---

1. **संज्ञानं** - सम् उपसर्गपूर्वक 'ज्ञा - अवबोधने' इति धातोः भावे ल्युट् ।
2. **मेधा** - मेधते सङ्गच्छते अस्यामिति । 'मेधृ - सङ्गमे' इति धातोः 'षिद्भिदादिभ्योऽङ् इत्यङ् ततः टाप् ।
3. **मनीषा** - मनस ईषा, 'शकन्ध्वादिषु पररूपं वाच्यम्' इति वार्तिकेन टेः पररूपम् ।
4. **जूतिः** - जवनम् । जुः - स्त्रोतोवेगे इति धातोः स्त्रियां क्तिन् । ऊतियूति इति सूत्रेण - निपातनम् ।
5. **असुः** - प्राणादिजीवनाक्रियानिमित्ता वृत्तिः । इति सायणभाष्यम् ।

**आ.भा.** - एवमुपास्यस्यात्मनो बाह्याभ्यन्तरेन्द्रियव्यतिरिक्तत्वं प्रतिपाद्य धर्मभूतज्ञान-प्राणाभ्यामपि व्यतिरेकं प्रतिपादयति। **संज्ञानमित्यादिना । संज्ञानं** - सामान्यतो ज्ञानम्। **एतत्त्वेन** वस्तुज्ञानमित्येतत् **आज्ञानं** - अत्र आङ्पदार्थः तेन धर्मभूतज्ञानस्य अल्पावस्था प्रोक्ता भवति । ईषज्ज्ञानमित्येतत्। **विज्ञानं** - विभिन्नै रूपैः एकस्यैव वस्तुनो ज्ञानम्। **प्रज्ञानं** - प्रकृष्टं ज्ञानम्। ज्ञानस्य प्रकर्षश्च यथावस्थितवस्तुविषयत्वम् । प्रमाज्ञानमित्येतत् । **मेधा** - गृहीतार्थस्य धारण-क्षमा बुद्धिः। दृढतरं ज्ञानमित्येतत्। **दृष्टिः** - दर्शनं, इन्द्रियजंन्यं ज्ञानम्। प्रत्यक्षज्ञानमित्येतत्। **धृतिः** - निश्चयात्मकं ज्ञानम्। **मतिः** - मननात्मिका बुद्धिः। **मनीषा** - मनस ईषा मनीषा मनस ईशयित्री बुद्धिर्यया **बुध्द्या** मनो नियन्त्र्यते। **जूतिः** - रोगादिप्रयुक्तवेदनाऽनुभवात्मिका बुद्धिः। **स्मृतिः** -गृहीतार्थविषयिणी बुद्धिर्या प्राक्तनानुभवजन्यसंस्कारसमुद्बोधानन्तरं जायते। **सङ्कल्पः**-इदमित्थं करिष्यामि इत्यादिरूपा बुद्धिः। **क्रतुः** -उपासनात्मिका बुद्धिः -निदिध्यासनपर्याया **असुः**-प्राणनादिजीवनौपयिकवृत्तिरूपं ज्ञानम् । अनेकप्राणनवृत्त्याश्रय प्राणोऽपि विवक्ष्यते । प्राण-व्यतिरेस्यापि उपास्यभूत आत्मनि प्रतिपिपादयिषितत्वात् । **कामः** - असन्निहितविषयकेच्छा-रूपः। **वशः** - अङ्गनालिङ्गनाद्यभिलाषा। इच्छाया अपि धर्मभूतज्ञानावस्थारूपतैव। संज्ञानम् इत्यारभ्य वश इति पर्यन्तमुक्ताः संज्ञानादयो धर्मभूतज्ञानावस्थास्वरूपाः । असुपदेन प्राणश्च विवक्षितोऽतः धर्मभूतज्ञानप्राणातिरेक उपास्यस्यात्मन इत्येवमपि निर्णयं मीमांसमानास्ते मुमुक्षवोऽकार्षुः। चक्षुरारभ्य वशपर्यन्तेभ्यः सर्वेभ्यो व्यतिरिक्तत्वे हेतुमुपन्यस्यति सर्वाण्येतानि इत्यादिना। एतानि बाह्याभ्यन्तरेन्द्रियप्राण धर्मभूतज्ञानानि सर्वाणि **प्रज्ञानस्य** - प्रज्ञानस्वरूपस्य ब्रह्मण उपास्यात्मनो **नामधेयानि** - शेषभूतानि उपास्यस्यात्मनः शरीराणीत्येतत्।

ननु नामधेयपदस्य वाचकशब्दपरतया एव दृष्टत्वाच्छरीरिपरतया वर्णनमनुचितमिति चेत् एतानि सर्वाणि इत्यनेन चक्षुरादीनामर्थरूपाणामेव ग्रहणार्थस्य च वाचकत्वाऽयोगात् नामधेयपदमुख्यार्थस्य बाधितत्वेन लक्षणया शरीररूपार्थे ग्रहणमुचितमेव । मुख्यार्थबाधे लाक्षणिकार्थग्रहणस्य शास्त्रकारशैलीसिद्धत्वं च प्रसिद्धमेवेति। नामधेयपदस्य मुख्यार्थपरताया आग्रहश्चेत् स एव अर्थोऽस्तु तदा तानि सर्वाणि चक्षुरादीनि प्रज्ञानस्य नामधेयानि वाचकानि यैः शब्दैः चक्षुरादीनि बोध्यन्ते सर्वेऽपि शब्दाः परमात्मनः वाचका भवन्ति सर्वेषां शब्दानां स्वार्थशरीरकपरमात्मपर्यन्तार्थवाचकत्वात् । अस्मिन्नपि तानि सर्वाणीत्यस्य पूर्वोक्त चक्षुः संस्थानादिवाचकपदानीत्यर्थः करणीयः स लक्षणाश्रयणप्रयुक्त एवेति वरं ततो नामधेयपदे लक्षणाश्रयणमिति विभाव्यताम् ॥

**सु.** - यतोऽयं द्रष्टा येनैवान्तरात्मना पश्यति दृशिसाधनं मनश्च यदात्मकतयैव दृशौ साधनभावमर्हति, अत एव द्रष्टुर्धर्मभूता या दृशिः संज्ञानादिलक्षणा साप्यस्यैव परमात्मनः

प्रज्ञानस्वरूपस्य गुणभावं प्राप्नोतीत्याह - **संज्ञानमित्यादिना** । **संज्ञानं** - प्रबोधसामान्यलक्षणम् , **आज्ञानम्** - आदेशः, **विज्ञानं** - विशेषतो ज्ञानम् , **प्रज्ञानम्** - शास्त्रजन्यं विज्ञानम् , **मेधा** - अर्थावधारणनैपुण्यलक्षणा, **दृष्टिः** - ऐन्द्रियकं विज्ञानम् , **धृतिः** - धैर्यम् , **मतिः** - मननम् , **मनीषा** - मननसामर्थ्यम् , **जूतिः** - दुःखम् , स्मृतिसङ्कल्पौ प्रसिद्धौ **क्रतुः** - उपासनम् , **असुः** - प्राणनमात्रासाधारणं चैतन्यम् , **कामः** - विषयाभिलाषः , **वशः** - परवशता लक्षणं ज्ञानाप्रागल्भ्यम् इत्येतानि **प्रज्ञानस्य** - प्रज्ञानैकस्वरूपस्य परमात्मनः **नामधेयानि** - गुणीभूतानि, नाम ह्यर्थस्य गुणीभूतम् , शेषभूतमित्येतत् । यद्वा - **नामधेयानि** - बोधकानि । अयं भावः - यो भावो यस्य करणस्य यस्य कर्तुर्वा धर्मः, तेन भावेन तत् करणं स च कर्ता व्यवह्रियते , तद्बोधकशब्देनावबोध्यते, तत् द्रष्ट्रात्मको दर्शनकरणात्मकश्चायं प्रकृष्टज्ञानस्वरूपः परमात्मा सर्वप्रकारेण अवस्थितः दृशिभेदैः संज्ञानादिभिः भावैः व्यवहारमर्हतीति तानि **एतानि** - तस्यावबोधकानि, तद्वाचिभिरपि तैः शब्दैः स एव बोध्यते ॥

**[ब्रह्मादिदेवानामपि तद्वश्यता]**

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पंच महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव । बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञा नेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ३ ॥**

**प्र.दी. - स एष इति** । **सः** - पूर्वोक्तः 'स ईक्षत लोकान् सृजा' इत्युक्तवाक्यप्रतिपाद्यः **एषः** - आत्मशब्दप्रतिपाद्यः श्रीमन्नारायणः **ब्रह्म** - *तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते* (मुं.उ.१-१-९) इति श्रुत्यन्तरप्रतिपाद्यप्रकृतिशरीरक इत्यर्थः । यद्वा बृहत्वादिगुणयुक्तो वा, सः पूर्वोक्तः **एषः** - नारायण एव *स ब्रह्मा स शिवस्सेन्द्रस्सोक्षरः परमस्स्वराद्* (तै.ना.११) इति *तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा* (तै.ना.७) इति श्रुत्यन्तरोक्तरीत्या, *यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः* (तै.ना.९४) इति, *देवानामस्मि वासवः* (भ.गी.१०-२२) इति श्रुतिस्मृत्यादिप्रमाणैः - नारायण एव सर्वान्तर्यामित्वेन सर्वशरीरत्वेन सर्वशब्दवाच्यत्वेन संव्यवह्रियते । अतः इयं श्रुतिरपि नारायणस्सर्वशब्दवाच्य इति वदति । **एष इन्द्रः प्रजामतिः** इत्यादिभिः **एषः** - नारायणः **इन्द्रः** - देवराज इत्युच्यते । इदिधात्वर्थस्यास्मिन् परमात्मनि मुख्यवृत्त्या वर्तमानत्वात् । **एष** एव **प्रजापतिः** सर्वजगत्सृष्टेः प्रथमोत्पन्नः ब्रह्माण्डशरीरी विराद् पुरुषः । *नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्* (वि.पु. १-२२-२१) इति स्मृत्या

सर्वप्रजापालकत्वरूपधर्मस्यास्मिन् मुख्यतया विद्यमानत्वात् प्रजापतिशब्दवाच्यश्चायमभवत् । **एते सर्वे देवा** - प्रपंचात्प्रथमजन्यविराट्पुरुषमुखनिर्भेदद्वारेण उत्पन्न अग्न्यादिलोकपाला ये वर्तन्ते ते सर्वे देवा नारायणांशभूता एव नारायणशरीरभूता इत्यर्थः । देवो मनुष्य इत्यादिशब्दाः यथा देवादिपिण्डशरीरकजीववाचका भवन्ति - तद्वत् । **इमानि पंचमहाभूतानि** - अण्डावरणभूतमहाभूतानि **पृथिवीवायुराकाशापोज्योतीष्येतानि इमानि** - अण्डान्तरवर्तीनि परिदृश्यमानानि पंचभूतानि, **क्षुद्रमिश्राणि** - क्षुद्रैः अवान्तरभेदैः मिश्राणि सर्पादीनि । **इव** शब्दोऽनर्थकः । **बीजानि** - कारणभूतानि व्रीह्यादिधान्यानीत्यर्थः । **इतराणि चेतराणि च** - द्वैराश्यत्वेन निर्दिश्यमानानि कानि तानि इति जिज्ञासायां उच्यन्ते **अण्डजानि** - पक्ष्यादीनि, **जारुजानि** - जरायुजानि, मनुष्यादीनीत्यर्थः । **स्वेदजानि** - यूकादीनि शिरोरुहेषूत्पन्नानि । **उद्भिज्जानि च** - वृक्षादीनि **अश्वा गावः पुरुषाः** - मनुष्याः, **हस्तिनः** - गजाः **यत्किंचेदं** - प्राणिजातं **जङ्गमं पतित्त्रि च** - पद्भ्यां यच्चलति तज्जङ्गमं यच्च आकाशे पक्षैरुड्डीयते गच्छति तत्पतत्त्रि पक्षिजातं **यच्च स्थावरं** - पर्वतादि तत् पूर्वोक्तं **सर्वं प्रज्ञानेत्रं** - प्रज्ञानमित्यर्थः । प्रकृष्टं ज्ञानं यस्य सः, *यस्सर्वज्ञस्सर्ववित्* (मुं.उ.१-१-७) इत्यादिश्रुत्यन्तरप्रमाणसिद्धसर्वज्ञः परमात्मा इत्यर्थः , प्रज्ञा प्रज्ञया परमात्मना सर्वं वस्तुजातं *तत्सृष्ट्वा तदेवानुप्राविशत्* (तै.आन.३०) इति श्रुत्या सर्वं जगत् वस्तुतां नीयत इति - प्रज्ञानेत्रं सत्तां प्राप्तमित्यर्थः । **प्रज्ञाने प्रतिष्ठितं** - उत्पत्तिस्थितिलयकालेषु प्रज्ञानशब्दवाच्ये परब्रह्मणि सर्वं जगत् प्रतिष्ठितं स्थावरप्रतिष्ठितया स्थितं **प्रज्ञानेत्रो लोकः** - अयं प्रपंचः प्रज्ञा परमात्मा सर्व प्रपंचस्य *एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निीषति, एव ह्येवासाधु कर्म कारयति तमधो निनीषतीति* (कौषी.उ.३-९) श्रुत्यन्तरादुत्तमाधमलोकप्रापकः यस्य लोकस्य सःलोकः प्रज्ञानेत्र इत्युच्यते । प्रज्ञा परमात्मा प्रतिष्ठा सर्वप्रपंचस्याश्रय इत्यर्थः । एतत्प्रज्ञानशब्दवाच्यमेव **ब्रह्म** - परं ब्रह्म बृहत्त्वादिगुणयुक्तश्रीमन्नारायण इत्यर्थः ।

**प्र.** - एवमिन्द्रियमनःप्राणधीव्यतिरेकमुपास्यस्यात्मनः प्रदर्श्य ब्रह्मेन्द्रादिव्यतिरेकं साधयति। **एष - एते सर्वे देवाः** । ब्रह्माद्या अपि देवास्तन्नामधेयानि, तच्छरीरभूता इत्यर्थः । इतश्च जीवानामुपास्यात्मव्यतिरेक उक्तो भवति । भूतभौतिकशरीरव्यतिरेकं साधयति । **इमानि च पंचमहाभूतानीति** । तान्येव दर्शयति **पृथिवी वायुराकाश आपो ज्योतींषीति** । निर्दिष्टानि पंचमहाभूतानीत्यन्वयः । **एतानीमानि च क्षुद्रमिश्राणीव बीजानि** - क्षुद्रैरल्पकैः मिश्राणि । **इव**शब्दोऽनर्थकः । तत् द्वेधा दर्शयति **इतराणि चेतराणि च** । तान्येव दर्शयति **अण्डजानि** - पक्ष्यादीनि ; **जारुजानि** - जरायुजानि , मनुष्यादीनीत्यर्थः । **स्वेदजानि चोद्भिज्जानि च** । **स्वेदजानि** यूकादीनि ; **उद्भिज्जानि** - वृक्षादीनि । **अश्वा गावः पुरुषाः हस्तिनः, यत्किंचेदं प्राणिजङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्** । यच्च गवाश्वपुरुषहस्तिपतत्र्यात्मकं जङ्गमं प्राणिजातम् , यच्च

स्थावरं , तत् सर्वं **च** प्रज्ञानेत्रं , **प्रज्ञानेत्रप्रतिष्ठितं** , प्रज्ञैव नेत्रमस्येति प्रज्ञानेत्रम्। नीयते अनेनेति नेत्रम् अन्तर्यामीत्यर्थः । **प्रज्ञाने** ब्रह्मणि उत्पत्तिस्थितिलयकालेषु प्रतिष्ठितम् । प्रज्ञानाश्रयम् इत्यर्थः। **प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा**। सर्वस्य जगत इति शेषः। **प्रज्ञानं ब्रह्म** । अतः प्रज्ञानमेव ब्रह्म। तस्य सर्वान्तर्यामित्वेन स्वरूपतो गुणतश्च निरतिशयबृहत्त्वस्य प्रज्ञान एव सत्त्वात् इति भावः ॥

**आ.भा.** - एवमिन्द्रियादिभिन्नत्वमुपास्यात्मनः प्रदर्श्य जीवात्मव्यतिरिक्तत्वं दर्शयति श्रुतिः - **एष ब्रह्मेत्यादि** । **एष ब्रह्मा** - पूर्वं वर्णितो हिरण्यगर्भः । **एष इन्द्रो** देवराजत्वेन प्रसिद्धः शतक्रतुः । **एषः प्रजापतिः** - प्रजानामुत्पादकः सृष्टिपरिवर्धको देवः । **एते सर्वे देवाः** प्रसिद्धा वह्निवायुप्रभृतयः ते सर्वेऽपि प्रज्ञानस्य नामधेयानि इति पूर्वेण सम्बन्धः । प्रज्ञानस्वरूपस्य उपास्यस्यात्मनः शरीरभूतानि। शेषभूतानीत्येतत्। एतेषामप्यात्मभूत उपास्य आत्मा तस्मात् तेऽस्माकम् उपास्या इति मीमांसया ब्रह्मजिज्ञासवो निरचिन्वन् । ब्रह्मेन्द्रादीनां जीवत्वात् तैरितरेऽपि जीवात्मान उपलक्ष्यन्ते तेन जीवात्मव्यतिरेक उपास्यस्य साधितः । अतः परं भूतभौतिकभिन्नत्वं साधयितुं प्रवर्तते श्रुतिः **इमानि च पंच** इत्यादि। **पृथिवी** - गन्धादिगुणाश्रयो भूतः योऽप्प्रकृतिकः । **वायुः** - आकाशप्रकृतिकः शब्दस्पर्शगुणवान् सर्वदागमनशीलो भूतविशेषः । **आकाशः** - शब्दगुणाश्रयः प्रथमं भूतं अवकाशप्रदम् । **आपो** - जलानि शीतस्पर्शादिगुणकः तेजःप्रकृतिको भूतविशेषः इत्येतत्। **ज्योतींषि - वायुप्रकृतिको** भूतविशेष उष्णस्पर्शादिगुणाश्रयः तेजोऽपरपर्यायः । **एतानि** पंचमहाभूतानि निर्दिष्टानि तान्यपि नामधेयान्येव प्रज्ञानस्य इत्यन्वयः । **इमानि च एतानि च क्षुद्रमिश्राणि** - क्षुद्रैः तमोबहुलतया स्वल्पजीवनकालैरत एव क्षुद्रशब्दाभिधेयैः पतङ्गिकासर्पादिभिर्मिश्राणि सम्पृक्तानि भौतिकशरीराणि। इवशब्दोऽनर्थकः **बीजानि** - कारण-भूतानि सजातीयशरीरान्तरं प्रति निमित्तभूतानीत्येतत्। **इतराणि चेति** - विद्याभेदेन भिन्नजातीनि शरीराणि प्रदर्शयितुं इतराणीति पदं द्विरुक्तम् । विद्याभेदमेव दर्शयति - **अण्डजानीत्यादिना** । अण्डेभ्यो जातानि बककाकादीनि । जारुर्जरायुर्गर्भपरिवेष्टनं चर्म ततो जातानि **जारुजानि** - मनुष्यपशुशरीराणि। **स्वेदजानि** - स्वेदो, घर्मोदकं, शरीरद्रवभूतं तस्माज्जातानि यूकमशकादि-शरीराणि। **उद्भिज्जानि** - उद्भिद्य पृथिवीमूर्ध्वं विदार्य जातानि लतावृक्षादीनि। एभ्यो बीजेभ्यः निमित्तकारणेभ्यो जाता **अश्वा गावः पुरुषा हस्तिन** एते प्रसिद्धाः प्राणिनो जङ्गमाः सन्ति अन्यच्च यत् **जङ्गमं गमनशीलं** प्राणि प्राणिजातं यत् पादाभ्यां चलति, उरगेष्वपि पादेन्द्रियस्योरःस्थले सत्वात् जङ्गमत्वमेव। एवं मत्स्यप्रभृतिषु जलजेष्वपि जङ्गमत्वं द्रष्टव्यम् । **पतत्रि** - पतन्तं त्रायत इति पतत्रं पक्षः तदस्यास्तीति पतत्रि पक्षिप्राणिजातम् इदमपि जङ्गमान्तर्गतमेव । **यच्च स्थावरम्** - तिष्ठदेवास्ते न चलति। अचलमित्येतत्। **तत्सर्वं** - समग्रमेव प्रज्ञानेत्रम्। नीयतेऽनेनेति

**नेत्रं** प्रज्ञैव नेत्रं नयनकारकं यस्य तादृशम्। प्रज्ञापदेन प्रज्ञानात्मकस्य उपास्यस्यात्मनो ग्रहणम्। **प्रज्ञास्वरूपं ब्रह्म** - अस्य सर्वस्यैवान्तःस्थितं सन्नियामकमित्यर्थः। तेन सर्वस्यान्तर्वर्ती आत्मा यः स एवोपास्य इति फलति। किं च एतत्सर्वं **प्रज्ञाने** - प्रज्ञानस्वरूपे ब्रह्मणि **प्रतिष्ठितम्**। सर्वेषु कालेषु उत्पत्तिस्थितिलयदशायामित्येतत् । प्रज्ञानाश्रितमेव एतत्सर्वमित्यतः सर्वाश्रयः प्रज्ञानात्मा एवोपास्य इति भावः। **प्रज्ञानेत्रो लोकः** प्रज्ञास्वरूपः परमात्मा नायकोऽन्तर्यामी यस्य तादृशमेतज्जगत्सकलम् अतः सकलजगन्नायक आत्मा यः प्रज्ञानरूपः तस्यैव समुत्पास्यता नान्यस्येति ध्वन्यते। **प्रज्ञा** - प्रज्ञानस्वरूपं ब्रह्मैव सर्वस्यास्य प्रतिष्ठा आश्रयो जगतः। तस्मात् **प्रज्ञानं ब्रह्म** प्रज्ञानमेव समुपास्य आत्मा तदेव ब्रह्मपदेनोच्यते । तस्यैव स्वरूपेण गुणैश्च सर्वातिशायिबृहत्त्वाश्रयत्वमिति। एतावता कतम आत्मेति प्रश्नस्योत्तरमुक्तं सर्वान्तर्यामी यः स उपास्य आत्मेति। क आत्मेति प्रश्नोत्तरन्तु प्रज्ञानं ब्रह्मेति प्रज्ञानस्वरूप आत्मा समुपास्य इति॥

**सु.** - तस्यास्यात्मनः सर्वात्मतां प्रपंचयति - **एष ब्रह्मेत्यादिना**। उपक्रमे 'आत्मा वा इदमेक एवाग्र आसीत्' इति यदनन्यत्वं कार्यकारणयोः ज्ञापितं तदुपसंहारे प्रपंच्यते। शरीरात्मभाव-निबन्धनमिदं सामानाधिकरण्यम्। ब्रह्माण्डोदरवर्तिनो ब्रह्मादयो देवा एष एव, सर्वात्मा ह्येषः, यानि **च इमानि महाभूतानि** ब्रह्माण्डारम्भकाणि पृथिव्यादीनि तान्यप्येष एव। यानि चेमानि **इतराणि बीजानि** यानि चेतराणि बीजानीमानि, योनिजायोनिजभेदेन द्वैराश्यमभिप्रेत्य द्वेधा निर्देशः, तानि च बीजानि **क्षुद्रमिश्राणीव** इवशब्दोऽनर्थकः, एवार्थो वा ; क्षुद्रैः - अत्यल्पजीवितैरत्यल्पसुकृतैः समधिकतमस्कैरत एव क्षुद्रैः जीवैः विमिश्राणि बीजानीमानि। ब्रह्मादि देवदृष्ट्या मानुषो मशक इवेति क्षुद्रयोनिरेव। तानि कानि द्वैराश्यमापन्नानि बीजानि **अण्डजानि, जारुजानि** जरायुजानीत्ययं योनिजराशिः, **स्वेदजानि उद्भिज्जानि** चेत्ययोनिजराशिः। तानीमानि बीजान्येष एव। तेभ्यो बीजेभ्यो जाताः **पुरुषा हस्तिनो गावोऽश्वाः पतत्रि** प्रभृति **यच्च जङ्गमं प्राणिजातं यच्च स्थावरं** तरुगुल्मादि **सर्वं तत् प्रज्ञानेत्रम्** - नीयतेऽनया इति नेत्रम्, **प्रज्ञा** - प्रज्ञानं परमात्मा। स नेताऽस्य सर्वस्यात्मतयेति **प्रज्ञानेत्रम्**। जन्मस्थितिलयसमयेऽस्य प्रतिष्ठा **प्रज्ञाने** परमात्मन्येवेति तदिदं प्रज्ञाने प्रतिष्ठितम्। लोकोऽयं सर्वः **प्रज्ञानेत्रः** - प्रज्ञाननयनः, सर्वस्य सर्वार्थप्रकाशनमनेनैवेति भावः। सर्वस्यास्य **प्रतिष्ठा** - स्थितिस्थानं प्रज्ञैव - प्राज्ञः परमात्मैव। तदेतत् सर्वप्रतिष्ठाभूतं प्रज्ञानमेव परं ब्रह्म। *सत्यं ज्ञानमनन्तं ब्रह्म* (तै.आन.२-१) इत्यत्रापि ज्ञानशब्देन ब्रह्म श्रूयते। स्वयम्प्रकाशस्वरूपतयाऽस्य स्वरूपं ज्ञानमेवेति ज्ञानशब्देन निर्देशः सर्वज्ञाश्चायं न ज्ञप्तिमात्रम्॥

[**ब्रह्मज्ञानिनः मोक्षप्राप्तिः**]

**स एतेनैव [1]प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतस्समभवत् समभवदिति ॥ ४ ॥ ओं इत्युपनिषत् ॥**

1. प्रज्ञानात्मना इति प्र.दी. सम्मतः पाठः।

**प्र.दी.** - यः उपासकः ब्रह्मज्ञानी **प्रज्ञानात्मना एतेन** - पूर्वोक्तेन प्रज्ञानस्वरूप-श्रीमन्नारायणपरत्वज्ञानयुक्तः *नान्यः पन्था अयनाय विद्यते* (पु.सु.-१७) *नान्यः पन्था विद्यतेऽयनाय* (श्वे.उ.६-१५) इति परमपुरुषज्ञानादन्यः पन्थाः मोक्षाय नास्तीति निश्चयज्ञानयुक्तः **सः अस्माल्लोकादुत्क्रम्य** प्राकृतमण्डलद्वा प्राकृतदेहाद्वा **उत्क्रम्य** - वृक्षं त्यक्त्वा पक्षीव ऊर्ध्वं गच्छन् ब्रह्मरन्ध्रनाडीं भित्वा अर्चिरादिमार्गद्वारा मुक्तार्चिर्दिनपूर्वपक्षषडुदङ्मासाब्द-वातांशुमद्ग्लौर्विद्युद्वरुणेन्द्रधात्रादि आतिवाहिकगणनीतततत्तल्लोके तैस्सह **अमुष्मिन्** - ब्रह्मादिलोकेष्वित्यर्थः। **सर्वान् कामानाप्त्वा** - लब्ध्वा **स्वर्गे** - सुखप्रदे **लोके** - श्रीवैकुण्ठे **सर्वान् कामान्** - *सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता* (तै.आन.१-२) इति श्रुत्यन्तरप्रतिपाद्यपरब्रह्मणा सह पयसा ओदनं भुङ्क्ते इतिवत्। **सर्वान् कामानाप्त्वा** लब्ध्वा **अमृतः** - जन्मजरामरणादिरूपस्मृतिरहितः **समभवत् समभवदिति** - द्विरावृत्तिः। सर्वदापि जन्मजरामरणादिरहितो भवतीत्यर्थबोधिका इत्योमिति। अत्र ओमित्योंकारप्रयोगः *ब्रह्मणे त्वा मह स ओमित्यात्मानं युंजीत* (तै.ना.५१) इति पूर्वश्रुत्युक्तप्रणवार्थानुसन्धानवत् , अत्रापि अकारवाच्यायैव परमात्मने मकारवाच्यो जीवः - समर्पणीय इत्यर्थस्तु अनुसन्धेय इति भावः। अस्माल्लोकादुत्क्रम्य इत्यनेन जीवः शरीरादुत्क्रम्य लोकान्तरं प्राप्य परब्रह्मलोके सर्वान् कामानाप्नोतीत्यनेन कर्तृकर्मव्यपदेशात् जीवस्य परब्रह्मणोऽन्यत्वं कण्ठोक्त्या श्रुतिर्वदति। तथापि [1]केचित् महाबुद्धिशालिनः देवानांप्रियाः परब्रह्मैव अविद्यावृतं सत् जीवभावं जगामेति तदेव पुनः आप्तोपदेशात् परं ब्रह्म भवतीति वदन्ति। तथा चेत् अस्माल्लोकादुत्क्रम्य परब्रह्मलोके सर्वान् कामानाप्नोतीति श्रुत्यर्थस्यानर्थक्यं स्यात् तस्मात्तद्व्याख्यानं शब्दार्थविद्भिः बुद्धिमद्भिः पक्षपातं विना पुनः पुनरालोच्य ज्ञातव्यं कोऽयमात्मेति वयमुपास्महे। कतरस्स आत्मेतीत्यत्र अस्मिन् देहे उपास्यः कः उपासकः क इति जिज्ञासा जाता ब्रह्मविदुषाम्। नायं करचरणादिकः, आत्मा भवितुमर्हति। कुतः! एतैः करणैः सर्वं क्रियमाणमपि मम हस्तः मदीयः पाद इति - आत्मीयत्वेन प्रतिपादनादेते आत्मा न भवति। देहोऽप्यात्मा न भवति। मदीयशरीरमिति प्रतीतेः। शरीरमपि आत्मा न भवति। मनसोऽपि नात्मत्वम्। तदपि आत्मा न भवति। मदीयत्वेन तस्यापि प्रतीतेः। आत्मा वा इदमेक एवाग्र आसीदिति श्रुत्या परमात्मनो अन्यपदार्थस्य सृष्टेः पूर्वं अभावात्। परमात्मेव भ्रान्त्या अविद्यावृत्तिविशिष्टस्सन् स्वाद्वस्वादुभोक्ता जीवः आसीदिति केषांचिद्राद्धान्तः, चेत् यस्सर्वज्ञस्सर्वविदिति श्रुत्या सर्वज्ञस्य परमात्मनो भ्रान्तिर्न सम्भवति। *अनश्नन्नन्योऽभिचाकशीति* (श्वे.उ.४-६) इति श्रुत्यां च भगवतः स्वाद्वस्वादुभोक्तृत्वं नास्ति। *अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि* (छां.उ.६-३-२) इति श्रुत्या - जीवेन सह अस्मिन् जीवदेहहृदये प्रविष्टस्सन्

---

1. **केचित्** - अद्वैतिनः।

सर्वजीवनामरूपव्याकरणकर्ता परमात्मैवोपास्यः नतु जीवात्मा । तस्य चेतनत्वेऽपि नामरूप-व्याकर्तृत्वाभावात् - नायं देहादिकरणप्रपंचः । चेतनोपकरणत्वेऽपि स्वतः अचेतनत्वात् । अतः सर्वजगत्कर्ता सर्वज्ञो नारायण एव आत्मत्वेनोपास्य इत्यर्थः । अतः श्रीमन्नारायण एव सर्व ब्रह्मविद्भिः परमात्मत्वेन उपास्य इति भावः ॥

**इति श्रीमच्छ्रीभाष्यं जगन्नाथाचार्यसूनु श्रीरामानुजाचार्य विरचित प्रतिपदार्थदीपिकाव्याख्या समाप्ता**

**प्र. - स एतेनैव .........समभवदित्यो ।** **सः** - एवं वित् **अस्माल्लोकात्** - अर्चिरादिमार्गेण भगवल्लोकं गत्वा **प्राज्ञेन** - ब्रह्मणा सह *सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता* (तै.आन. १-२) इत्युक्तरीत्या सर्वान् कल्याणगुणान् अनुभवन् आविर्भूतब्रह्मस्वरूपो भवतीत्यर्थः ॥

**इति पंचमखण्डप्रकाशिका**

**आ.भा. - सः** - एवं रीत्या परात्मोपासको वामदेवः प्रस्तुतः **अस्माल्लोकात्** - एतच्छरीरात् प्रारब्धकर्मावसाने मूर्धन्यनाड्या **उत्क्रम्य** - निर्गत्य अर्चिरादिना ब्रह्मविद्गन्तव्येन देवयानेन **अमुष्मिन् स्वर्गलोके** - अप्राकृतदेशविशेषे भगवद्धाम्नि साकेतसंज्ञके गत्वा तत्र **प्रज्ञेनात्मना** - प्रज्ञानस्वरूपेण परब्रह्मणा रामाभिधानेन सह **सर्वान् कामान्** - तदीयकल्याणगुणान् मुक्तात्मनां तदीयकल्याणगुणातिरिक्तस्य काम्यस्य अभावात् **आप्त्वा** प्राप्य समनुभवन् सन् **अमृतः समभवत्** - आविर्भूतगुणाष्टकविशिष्टब्राह्मस्वरूपोऽभूदित्यर्थः । एवमन्योऽपि यः कश्चिदेवंविद् भवति एवमेवामृतो भवतीति भावार्थः ॥

**इति पञ्चमखण्ड आनन्दभाष्यम्**

**सु. - तदुपास्यः सो**ऽयमेव प्रज्ञात्मा परमात्मा, यः पूर्वं प्रस्तुतो वामदेव आत्मदर्शी **सः** - उपासितेनैव **प्रज्ञेनात्मना** उपायेन **अस्माल्लोकादुत्क्रम्य** प्राप्य स्वर्गं लोकमप्राकृतं मोक्षस्थानम् **अमुष्मिन् स्वर्गे लोके** - अक्षरे **सर्वान् कामान्** - ब्रह्मणा सह प्राप्य **अमृतः** - मरणरहितः, पुनर्भवरहितः **समभवत्** । द्विरुक्तिरध्यायपरिसमाप्तौ ।

लोकाश्च लोकपालाश्च प्राणिनश्च गवादयः ।
येन सृष्टाः प्रविष्टाश्च प्रज्ञात्मानं तमाश्रये ॥
भगवत्सहजानन्दपदपद्मैकसेविना ।
ऐतरेयोपनिषदो व्याख्येयं रचिता मया
अनया तत्प्रसादैकप्राप्तविज्ञानसंपदा ।
कृतिरेषा सुनिष्पन्ना स सर्वात्मा प्रसीदतु ॥

**इति पञ्चमखण्डसुबोधिनी**

* * *

## षष्ठः खण्डः

[शान्तिमन्त्रः]

**वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान् सन्दधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु मां । अवतु वत्क्तारम् अवतु वक्तारम् ॥**

**ओं शान्तिः शान्तिः शान्तिः**

**इति षष्ठः खण्डः**

**इति एतरेयोपनिषत् (आत्मषट्कम् )समाप्ता ।**

**प्र. - [1]वाङ्मे मनसि प्रतिष्ठिता ............।**

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावुदंचयत भाष्यसुधामुदारः ।

वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मुदुक्तिम् ॥

**इति श्री रङ्गरामानुजमुनिविरचितऐतरेयोपनिषत्प्रकाशिका सम्पूर्णा**

**आ.भा. -** प्राग् विद्योत्पत्तेः विद्याप्राप्तिप्रतिबन्धकभूतानां पश्चाच्च विद्योत्पत्तेरसम्भावना-विपरीतसम्भावनाजनकानां विघ्नानां परिहारायायं शान्तिपाठात्मकोऽध्यायः पठ्यते । तत्र वाङ्मनसयोः परस्परसहकारे सति विद्याप्रतिपादकग्रन्थभागः सरलतया साकल्येन चावधारयितुं शक्य इत्येतदभिप्रायेण तयोः परस्परप्रतिष्ठिततत्वमाशंसते शिष्यः ।

**मे** - मम **वाग्** - वागिन्द्रियं **मनसि प्रतिष्ठिता** भवतु । मनसा वक्तव्यतया सङ्कल्पितामेव वाच्यमुच्चारयतु नापराम् । **मे मनः** अन्तःकरणं **वाचि** - वागिन्द्रिये **प्रतिष्ठितम्** भवतु यद्यद् वाक्यजातं विद्याप्रतिपादकमस्ति वागिन्द्रियसमुच्चार्यं तदेव सङ्कल्पयतु नान्यदिति । **आविः** - शब्देन स्वप्रकाशरूपं ब्रह्म विवक्षितं तच्च प्रथमं सम्बोधनान्तम् । **हे आविः** - हे ब्रह्मन् **मे** - मह्यम् **आवीरेधि-** आविर्भूतं भव । दीर्धश्छान्दसः । वाङ्मनसे प्रति प्रार्थयते । हे वाङ्मनसे अन्योन्यप्रतिष्ठिते युवां **वेदस्य** - आत्मतत्वप्रतिपादकस्य वेदभागस्योपनिषत्स्वरूपस्य **मे** - मह्यं [2] **आणीः** - आनयनसमर्थे **स्थः** - भवतम् । तादृशं वेदभागं मदर्थमुपस्थापयेत्यर्थः । **मे** मम संम्बन्धि **श्रुतं** - श्रोत्रेन्द्रियद्वाराऽवगतमुपनिषदर्थजातं **मा प्रहासीः** - मां न कदाचित् त्यजतु । कदापि तद् विस्मृतिं न गच्छेत् इत्येतत् । **अनेन अधीतेन** - अचिरादेव गुरुमुखादवगतेन

1. वाङ्मे इति षष्ठखण्डविवरणं शाङ्कर इव अत्राप्युपेक्षितम् , केवलशान्तिपाठत्वात् । (भाष्यपरिष्कारः)

2. **आणीस्थितः** - आण्यां स्थितः विष्णो इति सम्बोधनम् । आधारः सर्ववेदानां वेदाणी प्राण उच्यते । तस्मिन्स्थितो हरिर्नित्यमाणीस्थ इति गीयते । इति शब्दतत्वे । इति मध्वभाष्यम् ।

आत्मप्रतिपादकवेदभागात्मकेन ग्रन्थेन निरन्तरं समभ्यस्यमानेन **अहोरात्रान्** - अहानि च रात्रयश्चाहोरात्रास्तान् सर्वाण्यहानि सर्वा रात्रीश्च अनुसन्दधामि संयोजयामि । रात्रिन्दिवम् आलस्यादिपरिहारपूर्वकं गुरुमुखाधीतात्मतत्वावबोधकग्रन्थाभ्यासपरो भवामीत्येतत् । **ऋतं वदिष्यामि** - परमार्थभूतमेव आचार्यमुखाधीतग्रन्थार्थं व्याख्यास्यामि न विपरीतार्थम् । **सत्यं वदिष्यामि** - मनसा सम्यगालोच्य सत्यभूतामेव वाचं निगदिष्यामि नासत्यभूताम् । ऋतपदेन मानसं सत्यं विवक्षितम् । सत्यपदेन तु वाचिकं सत्यमुच्यत इति विवेकः । **तन्मामवतु** । तद् ब्रह्म प्रज्ञानरूपं **मां** - शिष्यं, **अवतु** - गुरुमुखाधीतवस्तुनः सम्यग्बोधप्रदानेन परिपालयतु । **तद्वक्तारमवतु** । तद्विज्ञानात्मकं ब्रह्म समुपास्यमानमात्मतत्त्वमिति यावत् । **वक्तारं** - मदीयमाचार्यं **अवतु** - शिष्यजिज्ञासाशमनसमर्थबोधजनकशक्तिप्रदानेन पालयतु । एतत् प्रार्थनाद्वयं विद्याग्रहण-पूर्वकालाभिप्रायेण । **अवतु माम्** । **अवतु वक्तारमिति** पदव्यत्यासेन क्रियमाणं प्रार्थनाद्वयन्तु विद्याग्रहणोत्तरकालाभिप्रायेण बोध्यम् । **अवतु माम्** । **अवतु** - स्वतन्त्रात्मकभ्रमादिनिवृत्या समुत्पन्नपरमात्मस्वरूपयथार्थाऽवबोधपरिरक्षणेन च परिपालयतु **मां** शिष्यम् । **अवतु वक्तारम्** । **अवतु** - योग्यशिष्यलाभप्रयुक्तविद्यासम्प्रदायप्रवर्तनजन्यस्वात्मतोषरूपफलप्रदानेन परिपोषयतु **वक्तारम्** मदीयाचार्यम् । **अवतु वक्तारम्** इत्यस्य पुनः पाठोऽध्यायसमाप्तिसूचनाय । **ओं शान्तिरिति** वाक्ये ओंकारपाठेन परमात्मनः स्मरणात् स्वरूपतोऽर्थतश्च ग्रन्थान्ते समाचरणीयं मङ्गलमाचरितम् । तादृशमङ्लाचरणस्यापि शिष्टाचारपरिप्राप्तत्वात् तदाचरणं पश्चाद्-भाविभिरपि शिष्याचार्यैः करणीयमित्येतदर्थो ज्ञाप्यते । शान्तिशब्दस्य त्रिधापाठस्तु आध्यात्मिकाधि-दैविकाधिभौतिकरूपाणां त्रिविधतापानां शमनं भवतु इत्यभिप्रायेण कृतः । शुभं भवतु ॥

**इति भगवद्रामानन्दाचार्यविरचितं ऐतरेयोपनिषद्भाष्यं संपूर्णम्**



# अनुबन्धाः

# १. ऐतरेयोपनिषद्विवरणम्

## लक्ष्मीपुरं श्रीनिवासाचार्य विरचितम्

**श्रीरस्तु**

अभिवन्द्य महोदारामस्मद्गुरुपरम्पराम् ।
किञ्चित्करोमि लोकस्य वाचो विभवतोऽधुना ॥
विशिष्टाद्वैतसिद्धान्तप्रतिष्ठापनदेशिकैः ।
ऐतरेयोपनिषदो भाष्यं पूर्वैर्विनिर्मितम् ॥
नाद्यावध्युपलब्धं यत् जिज्ञासूनां कृते ततः ।
सिद्धान्तवर्त्मनैतस्याः वृत्तिर्लघ्वी वितन्यते ॥

अथ ऐतरेयोपनिषदं व्याख्यास्यामः । सेयमितरापुत्रेण ऐतरेयनाम्ना सन्दृष्टेत्यतः ऐतरेयोपनिषदिति प्रथते । उपनिषच्चेयमैतरेयारण्यकस्य ऋग्वेदीयस्य भागत्रयपरिकर्मितस्य, द्वितीये भागे तुरीय-पञ्चम-षष्ठ-सप्तमैः चतुर्भिः अध्यायैः सम्पूर्णा ।

अस्मिंश्चारण्यके प्रथमे भागे संवत्सराख्यसत्रविशेषः महाव्रताख्यः कर्मविशेषश्च प्रतिपादितः। द्वितीये भागे त्रिभिरध्यायैः प्राणविद्या प्रपञ्चिता । ततश्चतुर्भिः अध्यायैः ब्रह्मविद्या प्रस्तूयते । तावता सप्तभिरध्यायैः द्वितीयमारण्यकं संविभक्तम् । तृतीये तु भागे संहितोपास्तयः ब्रह्मविद्याङ्गभूताः समुपदिश्यन्ते । यथा - तैत्तिरीये आरण्यके ब्रह्मविद्या तदङ्गभूतानि कर्माण्युपासनानि च प्रतिपाद्यन्ते । तथा अत्रापीत्येषः प्रबन्धप्रतिपाद्यसङ्ग्रहोद्धारः ।

तत्र प्रथमं कारणस्यैव ध्येयतया परमात्मनः कृत्स्नजगत्कारणत्वम् उपदिशति - **आत्मा वा इदमिति ।**

**आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् ।**
**स ईक्षत लोकान्नु सृजा इति । स इमान् लोकानसृजत ॥**

**अम्भोमरीचिःमरमापः । अथोऽम्भः परेण दिवम्, द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः पृथिवी मरः, या अधस्तात् ता आपः ॥**

**स ईक्षत, इमे नु लोकाः, लोकपालान्नु सृजा इति । सोऽद्भ्यः एव पुरुषं समुद्धृत्यामूर्च्छयत् ॥**

**तमभ्यतपत्, तस्याभितप्तस्य मुखम् निरभिद्यत यथाऽण्डम् ; मुखाद्वाक् ; वाचोऽग्निः । नासिके निरभिद्येतां ; नासिकाभ्यां प्राणः, प्राणाद्वायुः । अक्षिणी निरभिद्येतां ; अक्षीभ्यां चक्षुः, चक्षुष आदित्यः । कर्णौ निरभिद्येतां ; कर्णाभ्यां श्रोत्रम्, श्रोत्राद्दिशः । त्वङ्निरभिद्यत ; त्वचो लोमानि, लोमभ्य ओषधिवनस्पतयः हृदयं निरभिद्यत ; हृदयात् मनः, मनसश्चन्द्रमाः । नाभिर्निरभिद्यत ; नाभ्या अपानः ; अपानात् मृत्युः । शिश्नं निरभिद्यत, शिश्नात् रेतः ; रेतस आपः ॥**

वैशब्दोऽवधारणे । इदं विभक्तनामरूपं बहुत्वावस्थं जगत् अग्रे सृष्टेःपूर्वं एकमेव अविभक्तनामरूपतया एकत्वावस्थापन्नमेव आत्मैवासीत्। अत्रात्मशब्दः कारणविषयत्वसामान्यात् कारणत्वौपयिकगुणविशिष्टं प्रकृतिपुरुषकालशरीरं परमात्मानमभिधत्ते। वैशब्देन विभक्तनामरूपः निरात्मको निस्स्वभावश्च तत्तद्वाद्यभिमतः प्रपञ्चः व्यवच्छिद्यते। एक एव इत्यनेन वक्ष्यमाणा स्रक्ष्यमाणलोकादिबहुत्वावस्था व्युदस्यते । तदिदं व्यवच्छेद्यद्वयं स्वयं श्रुतिः स्पष्टयति - **नान्यत्किञ्चन मिषदिति**। अन्यत् प्रकृतादात्मनः भिन्नं विभक्तनामरूपं बहुत्वावस्थं वा किञ्चिद्वस्तु न मिषत् नासीदित्यर्थः। स आत्मा इमान् लोकान् पृथिव्यादीन् सृजै-सृष्टिं करवाणि इतीक्षत संकल्पं कृतवानित्यर्थः। आडभावः छान्दसः। नु वितर्के। स इमान् लोकानसृजत। यथा संकल्पं कृतवानित्यर्थ। सृष्टान् लोकान् स्वस्वनाम्ना निर्दिशति **अम्भोमरीचीरिति**। एतेषां शब्दानां लोकवाचित्वप्रसिद्धेः अभावात् स्वयमेव व्याचष्टे **अदोम्भ इत्यादिना**। दिवं परेण द्युलोकस्य उपरि महर्जनस्तपस्सत्यलोकाः ये सन्ति या च द्यौः प्रतिष्ठा सर्वेषां देवानामाश्रयभूतः द्युलोकः अदः एतत्सर्वं अम्भः अम्भश्शब्दाभिधेयम् । लोकेष्वेतेषु पञ्चानां भूतानां साधारण्येपि जलस्य अभिधानं पृथिव्यपेक्षया सूक्ष्मत्वात् उपलब्धिविषयत्वाच्च प्राधान्यमभिप्रेत्य । मरीचिः मरीचयः अन्तरिक्षलोकः तस्य सूर्यमरीच्याश्रितत्वात्। मरः म्रियन्तेऽस्मिन् सर्वे प्राणिन इति पृथिवी। पृथिव्याः अधस्तात् याः पातालादिलोकाः ताः सर्वाः आपः आप्यायनसाधनत्वात् । इत्थं चतुर्दशभुवनात्मकाण्डसृष्टिः उक्ता महदादिसृष्टिं, ततः प्राचमुपलक्षयति।

अथ लोकपालसृष्टिः - **स ईक्षतेमे न्विति**। इमे किल लोकाः निष्पन्नाः। एषां लोकानां रक्षणार्थं लोकपालान् देवान् स्रक्ष्यामीति सङ्कल्पितवान् इत्यर्थः। सः सत्यसंकल्पः परमेश्वरः अद्भ्य एव जलोपलक्षितपञ्चभूतेभ्य एव पुरुषं पुरुषाकारं विराट्पुरुषं समुद्धृत्य गृहीत्वा अमूर्छयत् - कठिनमकरोत् उत्पादितवानित्यर्थः । सोऽयं विराट्पुरुषः सृष्टिकर्ता अनिरुद्धाख्योऽवतारविशेषः। विशेषेण विग्रहविशिष्टतया राजतीति विराट्। तस्माद्विराडजायत। विराजो अधिपूरुषः इति श्रुतिः।

ईश्वरो हि जगत्स्रष्टा विभुर्नारायणो विराट्। अनिरुद्ध इति प्रोक्तः अंशानां प्रभवाप्यये ॥ इति मोक्षधर्मवचनं च मानम्। इत्थं ब्रह्माण्डपालकसृष्टिरुक्ता।

अथावान्तरलोकपालसृष्टिः - **तमभ्यतपदिति** । अत्रावान्तरसृष्टेः चतुर्मुख कर्तृकत्वावगतावपि संज्ञामूर्तिक्लृप्त्यधिकरणन्यायेन परमात्मकर्तृकत्वमवगन्तव्यम्। तं विराट् पुरुषदेहं अभ्यतपत्। अभितः तत्तच्छिद्रतत्तद्गतेन्द्रियतदभिमानिदेवतासृष्ट्यर्थं पर्यालोचितवान् इत्यर्थः। आलोचनं च संकल्प एव। अभितप्तस्य अभितः पर्यालोचितस्य तस्य विराट्पुरुषस्य मुखं निरभिध्यत। मुखच्छिद्रं विदारितमभूत् - यथा पक्ष्यादीनां परिपक्वमण्डं भिन्नं भवति तद्वत्। मुखात्

तस्मान्मुखच्छिद्रात् वाक् वागिन्द्रियं निष्पन्नम् वाचः वागिन्द्रियात् अग्निः देवता निष्पन्ना । एवमुत्तरत्रापि छिद्रेन्द्रियदेवताः व्याख्येयाः । विशेषं तु वक्ष्यामः । घ्राणः घ्राणेन्द्रियम् । लोमानि लोमाधारभूतत्वङ्निष्ठस्पार्शनेन्द्रियमित्यर्थः । हृदयं हृदयकमलम् । रेतः उपस्थेन्द्रियम् । आपः देवताः । यद्यप्यण्डसृष्टेः पूर्वमेवेन्द्रियसृष्टिः । तथाऽपि स्थानसृष्ट्या तत्सृष्टिः उपचर्यते । देवतासृष्टिरपि अभिमानितया इति विभावनीयम् ।

इत्थम् इन्द्रियाणामभिमानिदेवतानां च सृष्टिकथनेन भोगोपकरणसृष्टिरुक्ता भवति । अथ भोगस्थानसृष्टिं विवक्षुः तदुपोद्घाततया क्षुत्पिपासासृष्टिं दर्शयति - **ता एता इति ।**

**ता एता देवताः सृष्टाः अस्मिन्महत्यर्णवे प्रापतन् । तमशनायापिपासाभ्यामन्ववर्जत् ।**

**ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति । ताभ्यो गामानयत् । ता अब्रुवन् न वैनोयमलमिति । ताभ्यो अश्वमानयत्ता अब्रुवन्नवै नोयमलमिति । ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतम् । ता अब्रवीद्यथायतनं प्रविशतेति । अग्निर्वाग्भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत् । आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत् । दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन् ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन् । चन्द्रमा मनो भूत्वा हृदयं प्राविशत् । मृत्युरपानो भूत्वा नाभिं प्राविशत् । आपो रेतो भूत्वा शिश्नं प्राविशत् । तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति । ते अब्रवीदेतास्वेव वां देवतास्वा भजाम्येतासु भागिन्यौ करोमीति तस्माद्यस्मै कस्मै च देवायै हविर्गृह्यते । भागिन्यावेवास्यामशनायापिपासे भवतः ॥**

ताः अग्न्यादयः लोकपालादेवताः सृष्टास्सत्यः अस्मिन् पूर्वोक्ते महत्यर्णवे समुद्रवदत्यन्त विस्तृते विराड्देहे प्रापतन् प्रकर्षेण पतिता अभवन् । तेन विराड्देहस्यातिविपुलतया भोगस्थानत्वम् असम्भवीति सूचितम् । तं विराट् पुरुषं क्षुत्पिपासाभ्यामन्ववार्जत् अनुसम्मितवान् स परमात्मेति शेषः । ताः एनं परमात्मानं प्रत्येवमब्रुवन् वयं ते विपुलं विराट् देहमापूर्य तत्र प्रतिष्ठातुं एतद्देपर्याप्तं अन्नं संपादियितुं असमर्थाः । यस्मिन् अल्पशरीरे प्रतिष्ठितास्सन्तः अन्नमेतद्देहपर्याप्तं सम्पाद्यादाम भुञ्जीमहि तादृशमल्पमायतनं शरीरं नः अस्मदर्थं प्रजानीहि अवधारय संपादयेति । ततः स परमात्मा ताभ्यो देवताभ्यः भोगाय गां गोदेहम् आनयत् - प्रापयत् । ताश्च देवता अब्रुवन् - नः अस्माकम् अयं गोदेहः न वा अलं नैव पर्याप्तं एकतोदन्तत्वात् इति । अतोयमपि गोदेहस्तिष्ठतु । अतोऽन्यमप्युभयतोदन्तन्देहं सृज इति भावः । ततः परमात्मा अश्वम् अश्वदेहमानयत् । ता अब्रुवन्नित्यादिपूर्ववत् । ततः पुरुषं पुरुषदेहं विवेकादिसाधनसंपन्नम् आनयत् । ताश्च देवताः सुकृतं परमात्मना सुष्ठु कृतमित्यब्रुवन् । आश्चर्यवाचकेन बतशब्देन स्वीयं परितोषं सूचयन्त्यस्सत्यः । यस्मान्मनुष्यदेह एव विवेकविज्ञानसम्पन्नः । तथा च

पूर्वमुदाहृतम् - 'पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नः विज्ञानं वदति, विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकाविति । तस्मात्पुरुषो वाव मनुष्यदेह एव सुकृतं, सुकृतमित्यनेन परितोषद्योतनेन शब्देन वक्तुं योग्य इत्यर्थः । अत्रोक्ता मनुष्यसृष्टिः चतुर्विधानामपि सृष्टीनां प्रदर्शनार्था ।

अथ भोगायतने इन्द्रियाणां तदधिष्ठातृदेवतानां च प्रवेशः कथ्यते - **ता अब्रवीत् इति ।** विराट्देह यस्मिन् स्थाने यदिन्द्रियमुत्पन्नं या च अभिमानिदेवतोत्पन्ना तत्स्थानमनुक्रम्य प्रवेशं कुरुत इति। इत्थं अनुज्ञातानां देवतानां प्रवेशं दर्शयति - **अग्निर्वागिति।** योऽयमग्निः वागिन्द्रियाभिमानी देवः स वाग्भूत्वा वागन्द्रिय एवान्तर्भूय मुखच्छिद्रं प्राविशत् । एवमुत्तरत्रापि भाव्यम् । न खलु वागादिषु इन्द्रियेषु अग्न्यादिदेवताः प्रत्यक्षमुपलभ्यन्ते । नापि देवताभिः अप्रेरितानामिन्द्रियाणां स्वस्वविषयग्रहणसामर्थ्यमस्ति । क्षुत्पिपासयोः विराट् देहे नियतस्य स्थानविशेषस्य पूर्वमश्रवणात् कृत्स्नशरीरे प्रवेशं दर्शयति **तमशनायापिपासे इति ।** ये क्षुत्पिपासे परमात्मना विराट्पुरुषे संयोजिते उभे परमात्मानं प्रति ते स्वार्थं स्थानविशषेमनुगृहाण इत्यब्रूताम् । परमात्मा पुनः तदर्थं स्थानविशेषमदृष्ट्वा युवामुभेऽपि एतास्वेवाग्न्यादिदेवतासु आभजामि संयोजिामि । ततः तास्वेव भागिन्यौ भागमुक्तौकरोमि इत्यब्रवीत् । यस्मादेवं परमात्मनोक्तं तस्मात् लोके यस्यै कस्या अपि देवतायै अग्न्यादिदेवतायै हविर्गृह्यते भोग्यं वस्तु समर्प्यते। अस्यामग्न्यादि देवतायां एतेऽशनायापिपासे भागिन्यावेव भवतः । अग्निवाय्वादिदेवतानां शरीरेष्वपि आहुतिस्वीकारे क्षुत्पिपासयोरेव शान्तिर्भवति । तथा मनुष्यादिशरीरेऽपि चक्षुराद्यधिष्ठातृदेवतानां क्षुत्पिपासोपेतत्वमवगन्तव्यम् । तथा हि - यदा पात्रे निहितमन्नं भोग्यं भोक्तुकामः आदरेण रक्षते । तदानी भोगप्रत्यासत्तिनिमित्तपरितोषवशात् मनसि तृष्णामात्रया शान्तैव भवति, न तु यथापूर्वं बाधते । एवमत्यन्तभोग्यान्नादिवार्ताश्रवणस्पर्शनादावपि यथोचितं तृप्तिलेशोनुभवसिद्ध इति । तदेतत् सर्वदेवतासु अशनायापिपासोपेतत्त्वमिति ।

यानि भोगस्थानानि गवाश्वपुरुषादिशरीराणि यानि च तत्प्रतिष्ठानि भोगोपकरणानि अग्न्यादिदेवताधिष्ठितानि वाक्चक्षुरादीनि इन्द्रियाणि तत्सृष्टिमभिधायाथ भोग्यसृष्टिमाह -

**स ईक्षतेमे नु लोकाश्च, लोकपालाश्च ; अन्नमेभ्यः सृजा इति । सोपोभ्यतपत् । ताभ्योभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायत ; अन्नं वै तत् ॥**

**तदेतदभिसृष्टं सत्यपराङ्त्यजिघांसत् तद्वाचाजिघृक्षत् । तन्नाशक्नोद्वाचा ग्रहीतुम् । स यद्धैचद्वाचाग्रहैष्यत् , अभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥**

**तत् प्राणेनाजिघृक्षत् । तन्नाशक्नोत् प्राणेन ग्रहीतुम् । स यद्धैनत् प्राणेनाजिघृक्षत् , अभिप्राण्य हैवान्नमत्रप्स्यत् ॥**

**तच्चक्षुषाऽजिघृक्षत् । तन्नाशक्नोत् चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षुषाऽग्रहैष्यत्, दृष्ट्वा हैवान्नमत्रप्स्यत् ॥**

**तच्छ्रोत्रेणाजिघृक्षत् । तन्नाशक्नोत् श्रोत्रेण ग्रहीतुम् । स यद्धैनच्छ्रोत्रेणाग्रहैष्यत्, श्रुत्वा हैवान्नमत्रप्स्यत् ॥**

**तत्त्वचाजिघृक्षत् । तन्नाशक्नोत्त्वचा ग्रहीतुम् । स यद्धैनत्त्वचाऽग्रहैष्यत्, स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥**

**तन्मनसाऽजिघृक्षत् । तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मनसाऽग्रहैष्यत् ध्यात्वा हैवान्नमत्रप्स्यत् ॥**

**तच्छिश्नेनाजिघृक्षत् । तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यत्, विसृज्य हैवान्नत्रप्स्यत् ॥**

**तदपानेनाजिघृक्षत् तदावयत् । स एषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ।**

**स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाभिव्याहृतं, यदि प्राणेनाभिप्राणितम्, यदि चक्षुषा दृष्टम्, यदि श्रोत्रेण श्रुतम्, यदि त्वचा स्पृष्टम्, यदि मनसा ध्यातम्, यद्यपानेनाभ्यापानितम्, यदि शिश्नेन विसृष्टम्, अथ कोऽहमिति॥**

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वाः तदेतन्नान्दनम् । तस्य त्रय आवसथाः, त्रयः स्वप्नाः अयावसथोऽयमावसथोऽयमावसथ इति ॥**

**स जातो भूतान्यभिव्यैख्यत् । किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती ३ । तस्मादिदन्द्रो नाम । इदन्द्रो ह वै नाम । तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥**

स परमात्मा ईक्षत पुनरपि एवमालोचयामास ये पृथिव्यादिलोकाः ये च लोकपालाः सेन्द्रियशरीरदेवतारूपाः ते सर्वे इमे सृष्टाः खलु एतेषाम् अन्नमन्तरेण जीवनासम्भवादेभ्योऽन्नं स्रक्ष्यामि इति । इत्थं विचार्यान्ननिष्पादनार्थं तत्कारणभूतानि जलप्रधानानि पञ्चभूतानि अभ्यतपत् सर्वतः पर्यालोचनमकरोत् । व्रीह्यादिरूपं बीजमयं फलादिरूपं वार्क्षमयं तृणादिरूपमोषधिमयं प्राण्यादिरूपं मांसमयं इति नानाविधमन्नं स्वस्वसामग्रीसमावेशेन सम्पन्नमस्त्विति सङ्कल्पं कृतवान् । अथ यथा सङ्कल्पं ताभ्योऽद्भ्यः जलोपलक्षितभूतेभ्यः पूर्वोक्तसर्वान्नात्मिका मूर्तिः अजायत ।

अन्नसृष्टिमुक्त्वा अन्वयव्यतिरेकाभ्यां तत्स्वीकारसाधनं निश्चिनोति - **तदेतदिति ।** यत्सृष्टमन्नं तदेतत् पराङ् पराङ्मुखं सत् अत्यजिघांसत् अतिशयेन पान्तुं गन्तुमैच्छत् । तत्र यद्यपि प्राण्यादिरूपान्नस्य हिंसाभयात्पराङ्मुखत्वं पलायनं च उक्तम् । तथापि व्रीह्यादिरूपाणां

केवलभोक्तृवर्णसाध्यग्रहणासामर्थ्यमेव तदुपचरितमितिमन्तव्यते । ततो भोक्तृवर्ग तत् अन्नं वाचा - वागिन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत्। अथ सर्वप्रयत्नेन वागिन्द्रियं प्रयुञ्जानोऽपि भोक्ता तेन तदन्नं ग्रहीतुं नाशक्नोत् । अथ इदानींतन उदाहरणेन सृष्टिकालीना तादृशशक्तिः स्फुटीक्रियते - **स यदिति। सः** भोक्ता एनत् अन्नं वाचा यदग्रहैष्यत् यदि गृहणीयात् तदेदानीमपि भोक्ता अन्नमभिव्याहृत्यैव यादृशं तादृशं भक्ष्यं भोज्यम् इत्यन्नवाचकशब्दमुच्यार्यैव अत्रप्स्यत् तृप्तो भवेत् । न हि वागिन्द्रियस्याभिधानसामर्थ्यमन्तरान्नग्रहणसामर्थ्यं किञ्चिदस्ति । न चैवमन्नशब्दोच्चारणमात्रेव तृप्तिः दृश्यते । तस्मात् सृष्टिकालेऽपि वाचोऽन्नस्वीकारसामर्थ्यं नास्ति इत्यभ्युपगन्तव्यमिति भावः । हि शब्दद्वयमसंभाव्यमानस्यापि अस्यार्थस्य प्रियत्वातिशयमाश्चर्यं द्योतयति। एवं षट्स्वपि पर्यायेषु व्याख्येयम् । विशेषं तु वक्ष्यामः - प्राणेन घ्राणेन्द्रियेण। अभिप्राण्य - अभ्याघ्राय। अपानगलबिलाधस्संयोगरूपनिगलनानुकूलेन अन्तर्मुखेन वायुना इत्यर्थः । तदन्नमजिघृक्षत् । ततस्तदन्नं आवयत् जग्राह अशितवानित्यर्थः । अथ वायोरेवान्नप्रमाणसाधनत्वात् तं प्रशंसति - **सैष इति।** यद्वायुः मुखबिलान्तस्सञ्चारी वायुरिति यदस्ति स एषः अन्नस्य ग्रहः - ग्राहकः। अयमर्थस्सार्वजनीनः।

किञ्च यद्वायुः योऽयं वायुः एष अन्नायुर्वै अन्नाद्वारा आयुर्हेतुरेव। 'यावदस्मिन् शरीरे प्राणो वसति तावदायुः' इति श्रुत्यन्तरं च।

अथ भोग्यभोगोपकरणभोगस्थानानां सृष्टिमुक्त्वा भोक्तृसृष्टिं दर्शयितुं विचारमाह - **स ईक्षत इति।** अत्र भोक्तुः जीवात्मनः भोक्तृत्वेन शरीरान्तःप्रवेश एव सृष्टिः इति ध्येयम्। 'नुवितर्के इदं सर्वं पूर्वसृष्टं वस्तुजातं मदृते मदंशभूतं जीवात्मानं भोक्तारं भोजयितारं च मां विना कथं स्यात् ? न कथञ्चिदुपपद्यते । न हि पुरस्वामिनं राजानं विना पुरस्य पौरस्य वा रचना शोभते । तस्माद्भोक्त्रा जीवेनात्मतया मया च अन्तरात्मतया अनुप्रवेशमर्हति इदं सर्वमित्यर्थः । अथ प्रवेशद्वार विचारः - **स इत्यादि।** द्वौ हि अत्र प्रवेशमार्गौ पादाग्रं ब्रह्मरन्ध्रं च। तयोर्मध्ये इतरेण मार्गेण प्रपद्यै प्रविशानीति विचारितवान् । इन्द्रियद्वाराणां तत्तदधिष्ठातृदेवताभिः आविष्टत्वादिति भावः। अत्र जीवात्मनोप्यात्मतया परमात्मनोऽनुप्रवेशः *अनेन जीवेन, द्वासुपर्णा सयुजा* इत्यादिश्रुत्यन्तरसिद्धः। एतावता सर्वसृष्टिः अन्तर्यामितया सर्वानुप्रवेशश्चोक्तः। तेन च स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदत्वमुक्तं भवति । तदेतत् तर्करूपेण विचारेण द्रढयति - **स ईक्षतेति।** वाचा - वागिन्द्रियेण स्वतन्त्रेण मत्संकल्पं विनैव यद्यभिव्याहृतम्। अभिव्याहरणरूपं कर्म निष्पन्नं स्यात् अथ कोऽहं को नाम स्यां न कोऽपि भवेयं सत्यसङ्कल्पत्वसर्वशक्तत्वादिरूपमदसाधारणस्वभावविशिष्टं मद्दिव्यात्मस्वरूपं नैव सिद्ध्येत् प्रयोजनविरहात् । अस्मि चाहमेवंविधस्वभावस्वरूपः । अतस्सर्वं मत्संकल्पायत्तस्वरूपस्थित्यादिभेदमेवेति फलितार्थः । एवं यदि प्राणेन अभिप्राणितमित्यादावपि योज्यम्। एतेन -

मेघोदयस्सागरसन्निवेशस्त्विन्दोर्विभागः स्फुरितानि वायोः ।
विद्युद्विभङ्गो गतिरुष्णरश्मेः विष्णोर्विचित्राः प्रभवन्ति मायाः ॥

इत्युक्तरीत्या भगवतो निरतिशयमाहात्म्यमप्यनुमितं भवति इत्युक्तं भवति । श्लोकार्थस्तु- तात्पर्यचन्द्रिकायां आचार्यपादैः इत्थमन्वग्राहि - अस्मदाद्यगोचरोपादानोपकरणसंप्रदानादिगतानां तत्क्षणादेव सकलदिङ्मुखव्यापिनां धाराधराणामुत्पत्तिः, सकलभुवनाप्लावनलम्पटस्यैव जलनिधेः अम्बुरालम्बिनां तरंगाणां वेलातले निवृत्तिः प्रतिनियतकलावृद्धिक्षयशृङ्गोन्नमनादिरूपः चन्द्रमसो विभागः अशंकितागमानामनियतदिग्विशेषाणां तृणगिरिषणुलुंटाकानां चण्डमारुतानां विट्च्छूद्रयः, प्रशान्तदहनमिहिरहिमतटादिमहसि प्रावृषि निशीथेप्यविदितपूर्वोत्तरदक्षिणानां क्षणरुचीनां विभागः निरालम्बने विहायसि महीयसो मिहिरमण्डलस्य प्रतिनियतदिनकरजनिमा सायनवत्सरादिदेशिकः सञ्चारः । एवं विधान्यन्यानि परिवेषोपरागशक्रचापकरकास्तनिताशनि भूकम्पभपञ्जरभ्रमणादयः। **अत्यद्भुतप्रेताराः** सर्वे सर्वव्यापिनः सर्वशक्तेः विष्णोरेव विचित्रशक्तिमूला भवितुमर्हन्ति इति ।

इत्थं प्रवेशद्वारं प्रवेशप्रयोजनं च विचार्य अथ प्रवेशं दर्शयति - **स एतमिति** । सः परमात्मा एतमेव मूर्धमध्यभागमेव समानं स्थानविशेषं विदार्य - छिद्रं कृत्वा एतया द्वारा तच्छिद्ररूपेण मार्गेण प्रापद्यत - प्राविशत् । यद्यपि पंचाग्निविद्योपदिष्टप्रकारेणैव जीवस्य तदन्तर्यामिणश्च शरीरान्तः प्रवेशः । तथापि सृष्टिकालीनानुप्रवेशस्त्वीदृश इति वा, मुक्तिकालेन निर्गमो मूर्धन्यनाडीद्वारक इत्युपदेशाय प्रवेशमपि तादृशं श्रुतिर्व्यपदिशतीति वा, ज्ञानेन्द्रियबाहुल्यं मूर्धन्येनोपलभ्यते इति तदेव प्रवेशपदेन उपचर्यत इति वा न विरोधः ।

अथ प्रवेशद्वार प्रशंसा - **सैषा इति** । अक्षिश्रोत्रादिगोलकानां भृत्यस्थानीयैश्चक्षुरादीन्द्रियैः अधिष्ठितत्वात् । पुरस्वामिनः स्वस्य प्रवेशार्थमसाधारणं किञ्चिदद्वारमपेक्षितमित्यभिप्रेत्य प्रीतिपूर्वकं विदारितत्वात् इमम् उत्कर्षं प्रकटयितुं तस्य द्वारस्य विधृतिरिति नामसपन्नं तेन द्वारेण निर्गतानां ब्रह्मलोकप्राप्तिपूर्वकनिरतिशयानन्दहेतुत्वात् - तदेव द्वारं नान्दनमित्यप्युच्यते ।

इत्थं शरीरे प्रविष्टस्य सञ्चार**स्थानानि तेषु** अवस्थितिविशेषांश्च दर्शयति - **तस्य त्रय** इति । यथा महाराजस्य क्रीडार्थं प्रासादभूमिः यो निर्मीयते एवमस्य जीवात्मनः क्रीडार्थं त्रय आवसथाः, त्रीणि स्थानानि निर्मितानि मातृशरीरपितृशरीरस्वशरीररूपाणि । त्रितयं च **स्वप्नावस्थेनाव- लोक्यन्ते** । अयम् आवसथ इत्यादिना आवसथाः अवस्थाश्च अभिनीय हस्ताग्रेण प्रदर्श्यन्ते । अत्र स्वप्नपदेन वस्तुतत्त्वावभासराहित्यं विवक्षितम् , तच्च जागरितसुषुप्त्योरपि अक्षतं, विद्वद्भिर्ज्ञेयस्य ब्रह्मात्मकत्वस्य वस्तुतत्त्वस्याभावविरहात् ।

इत्थं सृष्टिप्रक्रियानिरूपणेन परावरतत्त्वविवेक उपदिष्टः । अथ अनेन विवेकेन उपासना स्वरूपमसंभवशंकापनोदनायानिर्धारितविशेषेण भूतावेक्षणेन च आह - **स जात इत्यादिना** । जातः

एवं शरीरप्रवेशजन्मजरामरणस्वप्नसुषुप्त्यादिभिः संसारीभूतः भोक्तृत्वावस्थामापन्नः । स जीवात्मा कदाचित् ईश्वरसौहार्दादिरूपसामग्रीसमावेशेन भूतानि चेतनाचेतनेश्वरात्मकानि सर्वाणि तत्त्वानि अभिव्यैख्यत् सर्वतो विविच्य ज्ञातवान् श्रवणं मननं च कृतवान् यः कश्चिद्धीरः । ततश्च सर्वस्य ब्रह्मात्मकत्वविज्ञानेन इह जगति किं वस्तु अन्यं ब्रह्मणोऽन्यत् वा **वदिषत्** - वदिष्यामि । न किञ्चिदपि अब्रह्मात्मकं वस्तु वक्तुं शक्नोमीति विजानन्नेव सः उपासकः ध्यायमानः एतमेव पुरुषं जगत्कारणभूतं हृदयकमलसन्निहितं परं ब्रह्म ततं - आत्मतया सर्वव्याप्ततया अपश्यत् - साक्षात्कृतवान् । एकस्तकारो लुप्तः । यथोक्तम् - ब्रह्मसाक्षात्कारं नामनिर्वचनेन प्रशंसति - इदमदर्शमिति इति । दुर्ज्ञानतमं परमात्मतत्त्वम् इदमदर्शम् इत्थं साक्षादकरवं इति यस्मात् कश्चिदुपासकः परितुतोष तस्मादिदं दृष्टमित्यनयैव व्युत्पत्त्या सोऽयमिदंद्र इति नामप्राप्तवानुपास्य इति शेषः । परितोषद्योतनार्था प्लुतिः । तस्यैतस्य नाम्ना निर्वचनानुसारेण उत्तमतमत्वं सूचयितुं इदंद्रो हवै नामेत्युक्तम् । न च लोके परमात्मानं इन्द्र इति व्यवहरन्ति । न तु इदन्द्र इति शङ्कनीयम्, यस्मात्परमार्थतो यथोक्तरीत्या इदन्द्रमेव सन्तं परोक्षार्थत्वादेकमक्षरं विलोप्य इन्द्र इत्येव व्यवहरन्ति । नापि परोक्षनिर्देशवैफल्यम् । यस्माद्देवाः पूज्याः सर्वे स्वयं नामगूढं कृत्वा उपाध्यायाः आचार्याः इत्यादि परोक्षनामन्येव प्रीतिं कुर्वन्ति । इव शब्द एवार्थः । हि शब्दः लोकप्रसिद्ध्यर्थः । अभ्यासोऽध्यायसमाप्त्यर्थः । अशङ्कादिना अनिर्वचनवदिदमपि बुद्धि-वैशद्यार्थम् । अनेन सन्दर्भेणात्मा द्रष्टव्य इत्युपासनविधिरुन्नेतः वेदितव्यः इति ।

**इत्यैतरेयोपनिषद्विवरणे प्रथमोऽध्यायः । आरण्यके द्वितीये तुरीयोऽध्यायः ॥**

एवम् आत्मा वा इत्यादिना 'अयमावसथः' इत्यन्तेन प्रबन्धेन सकलजगत्कारणभूत परब्रह्मात्मकं तत्त्वं निरूपितम् । 'स जात' इत्यादिना 'परोक्षप्रिया इव हि देवाः' इत्यन्तेन तदुपासन-रूपं हितं निरूपितम् । अथ पुरुषार्थनिरूपणोपोद्घाततया ब्रह्मानुभवानुरक्तस्य निखिलस्यापि सुखस्य दुःखात्मकतां वैराग्यसिद्ध्यै निरूपयितुं पूर्वाध्यायान्ते त्रय आवसथाः इति सूचितम् । जन्मत्रयमादौ निरूप्यते - **पुरुषे ह व इति ।**

**पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतः । तदेतत्सर्वेभ्योऽङ्गेभ्यः तेजस्सम्भूतमात्मन्येवात्मानं बिभर्ति । तद्यदा स्त्रियां सिञ्चत्यथैतज्जनयति तदस्य प्रथमं जन्म । तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा । तस्मादेनां न हिनस्ति । साऽस्यैतमात्मानमत्रगतं भावयति । सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोग्रेऽधिभावयति । स यत्कुमारं जन्मनोऽग्रेधिभावयत्यात्मानमेव तद्भावयति । एषां लोकानां सन्तत्यै ; एवं सन्तता हीमे लोकाः । तदस्य द्वितीयं जन्म । सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः**

**प्रतिधीयते। अथास्यायमितर आत्मा कृतकृत्यः वयोगतः प्रैति। स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म। तदुक्तं ऋषिणा -**

**'गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।**
**शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्॥ इति।**

**गर्भे एवैतच्छयानो वामदेवः एवमुवाच। स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतस्समभवत्समभवत्।**

योयं शरीरं जिघृक्षुः जीवात्मा सोयं पुरुषे पितृशरीरे प्रथमतो गर्भो भवति। न अत्र स्त्रीगर्भवत् उदरवृद्ध्या सोऽभिव्यज्यते। यदेतत् पितृशरीरे सप्तमधातुरूपं रेतोऽस्ति तदेव गर्भ इत्युच्यते। तस्मिन् रेतसि जनिष्यमाणस्य प्रविष्टत्वात् स्वर्गाद्वा नरकाद्वा वृष्टिद्वारा भूमौ समागतः जीवः व्रीहियवान्नद्वारा पितृशरीरे प्रविशति। एतच्च पञ्चाग्निविद्यायां प्रपञ्चेनाम्नातम्। तस्मिंश्च पुरुषशरीरे - अन्नरसशोणितत्वङ्मांसादिक्रमेण परिणते रेतस्यवस्थितो भवति। सोऽयं पुरुषगर्भ इत्युच्यते। तस्य गर्भस्य जन्मप्रकारं दर्शयति -

**तदेतदिति।** पुरुषगर्भत्वेन व्यवस्थितं यद्रेतोऽस्ति तदेतत् तस्मिन् पुरुषशरीरे आपादमस्तकं सर्वेभ्योऽङ्गेभ्यः अवयवेभ्यः तेजःसारभूतं सत् सम्भूतं निर्गतं भवति। आत्मानं स्वस्यैव रूपान्तरं सर्वावयवनिर्गतं सारभूतं रेतः आत्मन्येव - स्वशरीर एव बिभर्ति - पोषयत्यसाविति शेषः। तत् पोषितं रेतः अग्निसम्पर्केण घृतमिव कामाग्निना विलीनं सत् हृदये समागत्य व्यवस्थितं भवति। तादृशं रेतो यदा ऋतुकालीनगमनेन स्त्रीयोनौ गर्भाशये सिञ्चति अथ तदानीमयं पुरुषः एनत् जीवान्तराविष्टं रेतोरूपं शरीरं जनयति। तदेतद्रेतोनिस्सरणम् अस्य रेतस्यवस्थितस्य जीवस्य प्रथमं जन्म इत्युच्यते। तस्य त्रय आवसथाः इत्युक्तानां मध्ये प्रथमादावसथात् पितृशरीररूपात्सम्पन्नमिति कृत्वा प्रथमं जन्म भवति।

ननु स्त्रीशरीरे प्रविष्टं पौरुषं रेतः उपद्रवकारि स्यात् तच्छरीरसंलग्नबाणादिवत् इत्यत आह - **तत् स्त्रिया इति।** स्त्रीयोनौ प्रविष्टं तत् पुरुषरेतः तस्याः स्त्रियाः आत्मभूयं स्वशरीरभावं गच्छति यथा स्वं स्वकीयमङ्गं स्तनहस्तादिकं न शरीरात्पृथग्भूतं तथा तद्वत्। तस्मात्स्व-शरीरत्वेनैकीभावात् एनां स्त्रियं न हिनस्ति। उदरलग्नबाणवद्वेदनां न करोति। तद्गर्भद्वारेण स्त्रीपुरुषयोः उपकार्योपकारकभावं दर्शयति - **सा अस्यैतमित्यादिना।** सा - गर्भधारिणी स्त्री अत्र गतं स्वशरीरप्रविष्टं अस्य रेतस्सेक्तुः पुरुषस्य एतमात्मानं पुत्ररूपं भावयति - परिपालयति। विरुद्धाशनादिपरित्यागोऽनुकूलान्नाद्युपयोगश्च परिपालनम्। यस्मात् स्त्री गर्भस्य पालयित्री पुरुषस्यैव भावयत्री तस्मात्तेन पुरुषेण सा भावयितव्या - अभीष्ट अन्नपानवस्त्रादिप्रदानेन पालयितव्या भवति।

अथ स्त्रीपुरुषयोरुभयोरपि पुत्रं प्रत्युपकारकत्वं दर्शयति - **तं स्त्रीति** । तं पुत्ररूपं गर्भं मातृरूपा स्त्री महान्तं प्रयासं सोढ्वा - नव दश वा मासान् स्वोदरे धारयित्वा पोषयति । स च पिता अग्रे एव - प्रसवात्प्रागेव निष्पन्नं कुमारं जन्मनोऽग्रे प्रसवादूर्ध्वं च अभिभावयति । आधिक्येन भावयति । शास्त्रीयेन पुंसवन-जातकर्मादिना संस्करोति ।

कुमारसंस्कारेण पितुः उपयोगं दर्शयति - **स यदिति** । पुत्रसंस्कार इति यदस्ति तेन पिता स्वस्यैव संस्कारं करोति । पुत्रस्य स्वदेहरूपत्वात् । तथा च अन्यत्र श्रूयते - 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते' ॥ 'आत्मा वै पुत्रनामासि' इति च ।

ननु पितुः स्वजातकर्मादिना स्वकीयः संस्कारः पूर्वमेव सम्पन्नः किमनेन पुत्रसंस्कारेण पुत्रोत्पादनेन वा इत्यत आह - **एषां लोकानामिति** । पुत्रपौत्रप्रपौत्रादयः इमे जनाः लोकाः । तेषां लोकानां सन्तत्यै अविच्छेदार्थं पुत्रोत्पादनं संस्कारश्च । अनेन पुनः स्वोत्पादिते पुत्रे संस्कृते सति तथैव पुत्रोप्यन्यं पुत्रीमुत्पाद्य संस्करोति । सोऽप्यन्यं पुत्रमित्येवमेव इमे लोकाः अविच्छिन्ना भवन्ति । अन्यथा धर्मसन्तानविच्छेदात् अधर्मसन्तानसम्भेदाच्च लोकविनाश एव समापद्यतेति भावः । मातृशरीरात् निर्गमस्य पूर्वोक्तजन्मापेक्षया द्वितीयत्वात् तदस्य द्वितीयं जन्म इत्युक्तम् ।

जनकस्य पुत्रप्रयुक्तमुपयोगं दर्शयति - **सोऽस्येति** । अस्य पितुः द्वौ आत्मानौ देहौ । तयोर्मध्येऽयमात्मा पुत्ररूपो देहः पुण्येभ्यः कर्मभ्यः शास्त्रीयकर्मनिष्पादनार्थं प्रतिनिधीयते । स्वस्य प्रतिनिधित्वेन ग्रहोऽवस्थाप्यते । ननु किमनेन प्रतिनिधिना इत्यत आह - **अथास्येति** । अस्य पितुः इतरः आत्मा स्थविरो देहः कृतकृत्यः कृतान्येतज्जन्मप्रयुक्तानि कृत्यानीत्यसौ कृतकृत्यः । लौकिकानां कुटुम्बपोषणादीनां शास्त्रीयाणामग्निहोत्रादीनां च निष्पादितत्वात्कृत्यत्वम् । वयोगतः वयसा पूर्वकर्मसम्पादितेन आयुष हीनः प्रैति म्रियते । अतः पुत्रदेहेनैव पुण्यं कर्मकर्तव्यं न तु पितृदेहेन मृतेन कर्तुं शक्यमतः प्रतिनिधानम् ।

अथ तृतीयं जन्म दर्शयति - **स इत इति** । सः वृद्धः पिता इतः अस्मात् जरठदेहात् प्रयन्नेव निर्गच्छन्नेव स्वर्गे नरके मनुष्यलोके वा स्वकर्मानुसारेण पुनः जायते । न हि अस्माद्देहन्निष्क्रान्तस्य जन्मान्तरकालस्य व्यवधानमस्ति । तृणजलूकापेशस्कारिदृष्टान्तेन बृहदारण्यके सूक्ष्मशरीराश्रय-स्थूलशरीरनिर्माणश्रवणात् । तत् यदुक्तम् - पुनर्जननरूपं अस्य संसारिणः तृतीयं जन्म इत्युच्यते । यद्यपि पूर्वं जन्मद्वयं पुत्रस्य इदं तु पितुः अतो नैकस्य जन्मत्रयम् , तथापि पितुः सकाशाद्रेतोरूपेण, मातुस्सकाशात् कुमाररूपेण पुत्रीयजन्मद्वयमुदाहृतं तेनैव न्यायेन पितुरपि स्वीयपितृमातृसकाशात् जन्मद्वयम् अर्थादुक्तमेव इत्यभिप्रेत्य तदपेक्षया पितुः इदं तृतीयं जन्म । पुत्रस्य तु जन्मद्वयं साक्षात्कृतं पितृदृष्टान्तेन मरणादूर्ध्वं तृतीयं जन्म भविष्यति । एवं सर्वस्य

जन्मत्रयोपपादनलाघवायैवमुपन्यस्तम्। यद्यपि तृतीयस्य जन्मनः प्रथमद्वितीययोरेव अन्तर्भावः। तथापि चित्रत्वप्रदर्शनाय भेदव्यपदेशः। अनेन सर्वेषां जन्मत्रयोपवर्णनेन संसारे विरक्तिरुप- जायते । न हि मातापितृमलद्वयरूपस्य देहस्य निरन्तरधारणादधिकं जुगुप्सितं वैराग्यनिमित्तम् उदाहर्तुं शक्यम् -

यथोक्तं वैष्णवे पुराणे -

स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान्।
विरागकारणं तस्य किमन्यदुपदिश्यते ॥ इति।

तदेतस्य जुगुप्सितस्य संसारस्य तत्त्वविवेकमन्तरेण निवृत्त्यनुदयं शास्त्रप्रधानाभिधेयं परम- पुरुषार्थं च विशदयितुं मन्त्रमुदाहरति - **तदुक्तमृषिणा इति।** पुरुषे ह वा इत्यारभ्य तृतीयं जन्मेत्यन्तेन ग्रन्थेन यत्संसारस्य जुगुप्सिततमत्वम् उपवर्णितम्। यच्च संसारनिवर्तकतत्त्वज्ञानस्य उपदित्सिततमत्त्वम् उत्तरत्रोपवर्णनीयम् । ता उभावर्थौ केनचिन्मन्त्रेणाभिहितौ। तमेतं मन्त्रं पठति - **गर्भे न्विति।** अहं वामदेवाभिधानो मुनिः **गर्भेनु** मातुरुदर एव अवस्थितस्सन् एषामग्नि- वाय्वादित्यादीनां देवानां सर्वस्यापि प्रपञ्चस्यापि इत्यर्थः। विश्वा जनिमानि सर्वाण्यपि जन्मानि उत्पत्तिस्थितिप्रवृत्तिविनाशादीनि अन्ववेदं विदितवानस्मि स्वाधीनत्रिविधचेतनाचेतनस्वरूप- स्थितिप्रवृत्तिभेदपरतत्त्वज्ञानं निष्पन्नमिति यावत्। अथ एतस्मात्तत्त्वज्ञाननिष्पादधस्तात् मां वामदेवम् आयसः लोहनिर्मित शृङ्खलासमानाः शतं पुरः - अनेकशरीराणि अरक्षन् । यथा कारागारेऽवस्थितं तस्करम् लोहनिर्मित शृङ्खलाः पलायनाद्रक्षन्ति। तथा तानि शरीराणि यथा मुक्तो न भवामि। तथारक्षन्नित्यर्थः। इदानी तत्त्वसाक्षात्कारोदयात्। अस्मात्संसारात् श्येन इव जालं भित्त्वा जवसा निरदीयं त्वरया निर्गतोऽस्मि मुक्तोऽस्मि। मन्त्रसमाप्त्यर्थः इति शब्दः।

अस्य मन्त्रस्य तात्पर्यं श्रुतिरेवाह - **गर्भे एवेति।** अहमिति पूर्वमन्त्राभिहितो वामदेवः गर्भे मातृगर्भ एव शयानस्सन् एतत् पूर्वोक्तमर्थं एवमुक्तप्रकारेणोवाच - स वामदेवः एवमात्मतत्त्वं साक्षात्कुर्वन् प्रारब्धकर्मावसाने अस्माच्छरीरभेदात् एतच्छरीरवियोगोत्तरकालमेव मूर्धन्यनाड्या अर्चिरादिमार्गेणोत्क्रम्य अमुष्मिन् स्वर्गे लोके परव्योम्नि परं ब्रह्मोपसम्पद्य स्वेन रूपेणाभिनिष्पद्य सर्वान्कामानाप्त्वा परिपूर्णपरब्रह्मानन्दम् अनुभूय 'वासुदेवः सर्वम्' इति न्यायेन अमृतः परमात्मैव अभवत् । परमं साम्यमुपागमत् शाश्वतं वा सिद्धिम् उपागमदिति वा। अभ्यासोऽध्याय- समाप्त्यर्थः। अनेन मन्त्रतद्विवरणपरेण ग्रन्थेन पुरुषार्थः परिपूर्णपरब्रह्मानुभवरूप इत्युक्तो भवति।

**इत्यैतरोपनिषद्विवरणे द्वितीयोऽध्यायः द्वितीये आरण्यके पञ्चमोऽध्यायः**

एतावता *आत्मा वा इदमेक एव* इत्यादिना यत्तत्त्वमुपदिष्टम्, स जातो भूतान्यभिव्यैख्यत् इत्यादिना यद्विहितं संगृहीतं यश्च वामदेवोदाहरणेन पुरुषार्थः सूचितः। तदेतत्त्रयं विशदयितुम् अधुना ब्रह्मविद्विचाररूपषष्ठोऽध्यायः आरभ्यते -

**कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा। येन वा रूपं पश्यति, येन वा शब्दं शृणोति, येन वा गन्धानाजिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति, यदेतद्धृदयम्, मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिः, धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥**

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभूतानि पृथिवीवायुराकाश आपोज्योतींषि इत्येतानि इमानि च क्षुद्रमिश्राणीव बीजानि इतराणि चेतराणि च अण्डजानि च जारुजानि च स्वेदजानि च उद्भिज्जानि च अश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जंगमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्। प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा, प्रज्ञानं ब्रह्म। स एतेनैव प्रज्ञेनात्मना अस्माल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वामृतस्समभवत्समभवत् ॥**

**कोयमिति** - वयं प्रत्यहम् आत्मेति पदेनानुस्मृत्य यत्तत्त्वमुपास्महे सोऽयं कः। आत्म-पदार्थो निष्कृष्टः क इत्यर्थः। कतरः ? किं प्रत्यगात्मा आहोस्वित्परमात्मेति। ननु प्रत्यगात्मनः प्रत्यहमुपास्यत्वमेव नास्ति इति कथमियमाशङ्केति चेत् श्रूयतामवधानेन - 'आत्मेति तु उपगच्छन्ति ग्राहयन्ति च' इति न्यायेन जीवात्मनोऽपि उपास्यकोट्यन्तर्भावाद्युक्तः संशयः। तथा हि - उपासिता प्रत्यगात्मा यथा स्वशरीरस्य स्वयमात्मा तथा स्वात्मनोऽपि परंब्रह्मात्मा इत्येवो-पासीत इति हि तदर्थः।

अथ - अथ योन्यां देवतामुपास्ते अन्योसावन्योऽहम् अस्मीति न स वेद आत्मेत्येवोपासीत। सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद। इत्यात्मत्वाननुसन्धाननिषेधः पृथगात्मानं प्रेरितारं च मत्वा इति पृथक्त्वानुसन्धानविधिश्च कथमुपपद्यत इति चेन्न - अहमिति स्वात्मतयानुसन्धानादन्यत्वानु-सन्धाननिषेधस्य स्वरीरात्स्वात्मनोधिकतयाऽनुसन्धानवत् स्वात्मनोऽपि परमात्मनोधिकतया अनुसन्धानात्पृथक्त्वानुसन्धानविधानस्य च विरोधविरहात्। अत्र -

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावः तस्मादात्मेति कीर्त्यते ॥ इति।

निर्वचनपरे आत्मपदार्थवचने आप्नोति इत्यनेन सर्वव्यापकत्वं तदधीनं नियन्तृत्वमाधारत्वम्, आदत्ते इत्यनेन सर्वशेषित्वं अत्तीत्यनेन सर्वकर्मसमाराध्यत्वं तृतीयचरणेन नित्यत्वमित्याद्याः ये धर्माः व्यक्तीकृताः ते सर्वे यत्र निरूपाधिकाः सन्ति स एव आत्मपदार्थ इति व्यञ्जयितुम्

केषांचिदुत्तरमाह - येन वा पश्यति इत्यादिना। येन परमात्मना अनुगृहीतोऽयं जीवः पश्यति चक्षुषा रूपादिकमिति शेषः। एवमुत्तरत्रापि - येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यते। श्रोत्रस्य श्रोत्रं मनसो मनः इत्यादि श्रुत्यन्तरैकार्थ्यात् यदेतत् हृदयम् अध्यवसायात्मकवृत्तिविशिष्टमन्तःकरणं यदेतच्च मनःचिन्तावृत्तिविशिष्टं येन तत्तत्कार्यसमर्थं भवति इत्यर्थः। यदेतच्छब्दौ प्रसिद्धपरामर्शिणौ ; यथायोग्यं सर्वत्रान्वेतव्यौ। सम्यगिदं वस्त्विति ज्ञप्तिः संज्ञानम्। आज्ञप्तिरीश्वरभावः आज्ञानम् इदमस्माद्विशिष्टमित्येवमादिविवेको विज्ञानम्। ग्रन्थार्थादिसमुन्मेषः प्रज्ञानम्। ग्रन्थतदर्थधारणं मेधा। चक्षुषा रूपोपलब्धिः दृष्टिः। महत्यामप्यापदि तद्विषयगणनाराहित्यात्मकं धैर्यं - धृतिः। कर्तव्यकार्यालोचनरूपं मननं मतिः। स्वातन्त्र्यं मनीषा। प्राप्तकार्येषु मनोव्यग्रतारूपो जवः ; रोगादिजनितं मनोदैन्यं वा जूतिः। अनुभूतार्थस्मरणं स्मृतिः। असमीचीनेऽपि सम्यक्त्वेन कल्पनं संकल्पः। अवश्यं करिष्यामि इत्यध्यवसायः क्रतुः। जीवेन क्रियानिमित्ता प्राणादिवृत्तिरसुः। असन्निहितविषयाकांक्षा कामः। स्त्रीव्यतिकराभिलाषो वशः। इतिशब्दः प्रदर्शनार्थः। इत्येवमाद्या अन्या अपि सात्त्विकराजसतामसवृत्तयो द्रष्टव्याः। यानि बाह्यान्तरेन्द्रियतद्वृत्तिवाचकानि नामनि तानि सर्वाण्येवैतानि प्रज्ञानस्य प्रकृष्टज्ञानविशिष्टस्य प्रकृष्टज्ञानात्मकस्य वा परमात्मनः नामधेयानि बोधकानि इत्यर्थः। ज्ञाने प्रकर्षश्च सर्वप्रकारेण निरतिशयत्वम्। एतेषां परमात्मबोधकत्वं च सम्पूर्णवेदान्तव्युत्पत्तिमतां विशदम्।

एतावता नामप्रपञ्चस्य परमात्मात्मकत्वमुक्तम्। अथ रूपप्रपञ्चस्य तदाह - एष ब्रह्मेत्यादिना। ब्रह्मा चतुर्मुखः। इन्द्रः प्रसिद्धः। प्रजापतिः मन्वादिः। देवा अग्न्यादयः। अत्र सर्वत्र सामानाधिकरण्यं शरीरात्मभावनिबन्धनम्। पृथिवीत्यादिना पञ्चीकृतभूतोपादानान्महाभूतानि इत्यपञ्चीकृतानि तानि वेदितव्यानि। एतत्सर्वतत्त्वोपलक्षणम्। क्षुद्रमिश्राणि क्षुद्रैः अल्पकैः मशकपिपीलिकादिदेहैः मिश्राणीव लक्षितानि यान्यन्यानि इमानि बीजानि कारणानि मनुष्यादि पिपीलिकान्तास्सर्वे देहाः स्वयं पञ्चभूतकार्याणि सन्तः सजातीयदेहान्तरहेतुत्वेन बीजशब्दाभिधेयाः। तेषां च बीजानां नानाजातीयत्वमितराणि च इतराणि इत्यनेन प्रतिज्ञायते - परस्परविलक्षण-बहुभेदयुक्तानि इत्यर्थः। अण्डजानि इत्यादिना प्रतिज्ञातं प्रपञ्चयते - पक्षिसर्पादीन्यण्डजानि। जारुजानि, जरायुजानि, मनुष्यादीनि, क्रिमिदंशादीनि स्वेदजानि। तरुगुल्मादीन्युद्भिज्जानि। छान्दसरूपसिद्धिः। यथोक्तेष्वेव जरायुजानाम् - अश्वागावः पुरुषाहस्तिन इत्युदाहृत्य प्रदर्शनम्। उक्तानामनुक्तानां च संग्रहोपसंहारः यत्किञ्चेदं प्राणीति। तदेतत्सर्वम् आब्रह्म-स्तम्बपर्यन्तं जगत् प्रज्ञानेत्रं प्रकृष्टा ज्ञप्तिः प्रज्ञा परं ब्रह्म - तेन नीयते इति चेत्रं तदायत्त स्वरूपस्थितिप्रवृत्तिमत् इत्यर्थः। तदेव विवृणोति - 'प्रज्ञाने प्रतिष्ठितमि'त्यादिना। प्रज्ञाने परमात्मनि प्रतिष्ठितं विधृतम्। कारणेऽपि कार्यं ध्रियते। एतेनोत्पत्तिहेतुत्वं प्रज्ञानस्योक्तम्।

प्रज्ञानेत्रोलोकः। प्रज्ञया नीयते परमात्मना स्थाप्यते इति लोकः प्रज्ञानेत्रः। अनेन स्थितिहेतुत्व-मुक्तम्। प्रज्ञा परमात्मा प्रतिष्ठा प्रतितिष्ठत्यस्यामिति प्रतिष्ठालयस्थानमर्थः। अनेन लय-कारणत्वमुक्तं भवति।

एतावता प्रबन्धेन तत्त्वं प्रपञ्चेन विशोधितं, अथ हितं संग्रहेण विशोध्यते - **प्रज्ञानं ब्रह्मेति।** प्रज्ञा प्रकृष्टं ज्ञानं प्रकर्षश्च - अहरहरभ्यासाधेयातिशयत्वं वर्णाश्रमधर्मानुगृहीतत्वं तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपत्वं निरतिशयप्रीतिरूपत्वं परभक्तिपरज्ञानादिदशायोगित्व-मित्येवमादिकः शास्त्रान्तरप्रसिद्धोऽतिशयो वेदितव्यः। तादृशं प्रज्ञानं ब्रह्म तत्प्राप्तिसाधनं साध्यसाधनयोः अभेदोपचारः साध्यावस्थायां साधकानिवृत्त्यभिप्रायमूलः।

अथ पुरुषार्थो विशोध्यते - **स एतेन इत्यादिना।** सः इत्थमुपासिता पुरुषः उपासनेन प्रसन्नेन सिद्धोपायेन यथोपासनं फलप्रदान प्रज्ञाशालिनान्तर्यामिणा सहायेन अस्माल्लोकात् चरमशरीरात् मूर्धन्यनाड्या उत्क्रम्यार्चिरादिमार्गेण देशविशेषं प्राप्य परंज्योतिरुपसम्पद्य स्वरूपेणावि-र्भूय सर्वान् कामान् आप्त्वा अमृतः पुनरावृत्तिवर्जितः समभवत् संभवति। पूर्वोक्ताभिप्रायेण वा भूतनिर्देशः। अभ्यासोऽध्यायसमाप्त्यर्थः॥

**॥ इत्यैतरेयोपनिषद्विवरणे तृतीयोऽध्यायः॥**

**॥ ऐतरेयारण्यके द्वितीये षष्ठोऽध्यायः॥**

इत्थं तत्त्वविद्यां परिसमाप्य सप्तमाध्याये शान्तिकरं पाठं पठति -

**वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीः अनेनाधीतेनाहोरात्रान् संदधामि। ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु, तद्वक्तारमवतु अवतु माम् अवतु वक्तारमवतु वक्तारम्॥**

**॥ इत्यैतरेयारण्यके द्वितीयारण्यके सप्तमः अध्यायः समाप्तः॥**

**॥ समाप्तं च द्वितीयारण्यकम्॥**

निरुक्तब्रह्मविद्या प्रतिपादकोपनिषद्ग्रन्थपाठे प्रवृत्ता मदीया वाक् मनसि प्रतिष्ठिता मनसा यद्यद्विवक्षितं तदेव पठति। मनश्च मदीयं वाचि प्रतिष्ठितम्। वाचा च या या विद्या पठनीया सैव मनसापि विवक्ष्यते। एवं परस्परानुगृहीते वाङ्मनसे असौ विद्यां कात्स्न्र्येनाव-धारयितुं शक्नुतः। मनसोऽवधानाभावे हि वागिन्द्रियं सुप्तोन्मत्तप्रलापादिवत् यत्किञ्चिदसंगतमेव ब्रूयात्। तथा वाचस्सावधानपाठाभावे मनश्च विपरीतवृत्तं स्यात्। अतः तयोः अन्योन्यानु-कूल्यमस्त्त्विति प्रार्थ्यते। हे वाक् यथोक्तरूपैव त्वं एधि मदर्थं आविरोधि - आविर्भव। हे च मनः त्वमप्येवमेव आविरोधि - आविर्भव। दीर्घः छान्दसः। युवां मे वेदस्य विद्यायाः आणि आनयितारौ - प्रापयितारौ स्थः। आनयनसमर्थौ भवतमिति भावः। मे श्रुतं मयावगतं सर्वं माप्रहासीः

मा त्यजतु विस्मृतं मा भूदित्यर्थः। अनेनाधीतेन अविस्स्मृतेन विद्याविशेषेण अहोरात्रान् सन्दधामि यावदायुषं संयोजयाम्यात्मानं युक्तो भूयासमिति भावः। ऋतं परमार्थं वदिष्यामि। विपरीतार्थवदनं मा भूत् इति भावः। ऋतं मानसम्। सत्यं वाचिकम्। तत् मया पठ्यमानं विद्यात्मकं तत्प्रतिपाद्यं वा वस्तु मां शिष्यमवतु सम्यग्बोधेन पालयतु। तथा वक्तारमाचार्यं च अवतु बोधकतासामर्थ्यप्रदानेन पालयतु। पुनः कथनं फलविशेषाय। अध्यायारण्यकसमाप्तिद्योतनाय अवतु वक्तारम् इत्यभ्यासः। अनेन मन्त्रपाठेन विद्योत्पत्तेः प्राक् विद्याप्राप्तिप्रतिबन्धकभूतविघ्नपरिहारः। अनन्तरं च असम्भावना विपरीतसंभावनाजनकभूतपापरूपविघ्नपरिहारः। शिष्यस्य फलं विद्याप्रप्तिः। आचार्यस्य फलं प्रवचनरूपभगवत्कैङ्कर्यलाभः इति यथायथं विवेकोऽनुसन्धातव्यः। इति सर्वं भद्रम्।

इत्यैतरेयोपनिषद्वृत्तिमल्पाक्षरां व्यधात्।
लक्ष्मीपुरं श्रीनिवासः प्रियतां स श्रियःपतिः॥

**॥ इति ऐतरेयोपनिषद्विवरणे तुरीयोऽध्यायः॥**

**॥ ऐतरेयोपनिषत्समाप्ता॥**



# २. मन्त्राणामकारादिसूचनी



* * *

# ३. प्रमाणानामकारादिसूचनी

| प्रमाणानि | आकरः | पु.सं. |
|---|---|---|
| अत - सातत्यगमने | धा.पा. ३८ | 27,28 |
| अथातो ब्रह्मजिज्ञासा | ब्र.सू.१-१-१ | 30 |
| अथातः सम्प्रत्तिः | बृ.उ.३-५-१७ | 64 |
| अनावृत्तिश्शब्दात् | ब्र.सू.४-४-२२ | 67 |
| अनश्नन्नन्यो | श्वे.उ.४-६ | 77 |
| अनेन जीवेनात्मना | छां.उ.६-३-२ | 29,49,51,52,68,77 |
| अहं ब्रह्म | बृ.उ.३-५-१७ | 63,64 |
| इन्द्रो मायाभिः | बृ.उ-४-५-१९ | 56,57 |
| ईक्षतेर्नाशब्दम् | ब्र.सू.१-१-५ | 30 |
| ऋतं पिबन्तौ | कठ.उ.३-१ | 68 |
| एको ह वै | महो.१-१ | 27 |
| एष ह्येव | कौषी.उ.३-९ | 74 |
| गृहां प्रविष्टौ | ब्र.सू.१-२-११ | 51 |
| चक्षुषश्चक्षुः | केन.उ.१-२ | 71 |
| चन्द्रमा | पु.सू-१४ | 34 |
| जायमानं हि | महा.भा.मो.३५८-७३ | 53 |
| तत्सृष्द्वा तदेवानुप्राविशत् | तै.आन.३० | 74 |
| तदनुप्रविश्य | तै.आन.६ | 29 |
| तदेवाग्निस्तद्वायुः | तै.ना.७ | 73 |
| तमः परे देव | सुबा.उ.२ | 28 |
| तयोर्ध्वमायन्नमृतत्वमेति | कठ.उ.६-१६ | 52 |
| तस्मादेतद्ब्रह्म | मुं.उ.१-१-९ | 73 |
| देवानामस्मि | भ.गी.१०-२२ | 73 |
| द्रा-कुत्सायां गतौ | धा.पा.१०५४ | 56 |
| न च पुनरावर्तते | छां.उ.८-१५-१ | 67 |
| न ब्रह्मा | महो.१-१ | 27,28 |

* * *

## ४. ऐतरेयोपनिषदर्थसङ्ग्रहकारीकाः

[उत्तमूरु वीरराघवाचार्यविरचिताः]

आसीदात्मैक एवाग्रे आदौ लोकान् ससर्ज सः ।
लोकपालान् सिसृक्षुः स पुरुषं चादितोऽसृजत् ॥ १ ॥
मुखादिभ्यस्तदङ्गेभ्यो जीवानां करणान्यसौ ।
वागादीनि, ततोऽग्न्यादीरप्येषामधिदेवताः ॥ २ ॥
अशनायापिपासाभ्यां सृष्टाभ्यामाकुलेऽखिले ।
भोगायतनमस्राक्षीदन्नं स्रक्ष्यन्नतःपरम् ॥ ३ ॥
गवाश्वादिषु तासां च विभवन्यूनतां विदन् ।
सृष्ट्वा मानुषमत्रैताः साकमक्षैर्न्यवेशयत् ॥ ४ ॥
अन्नं सृष्ट्वाऽथ करणं व्यवस्थाप्य च तद्ग्रहे ।
स्वयमन्तर्विवेशैवं तेनेन्द्रेण जगत् ततम् ॥ ५ ॥
पुरुषं प्राप्य जीवस्य प्रवेशो यः स्त्रियां ततः ।
तदेव प्रथमं जन्म द्वितीयं जातसंस्क्रियाः ॥ ६ ॥
तृतीयं च वयोहानौ यत् प्रेत्य भवनं पुनः ।
एवं जन्मशतं विद्वान् वामदेवो व्यमुच्यत ॥ ७ ॥
इत्थं विदन् परात्मानं प्राज्ञं ब्रह्म नियामकम् ।
अक्षप्राणज्ञानदेवभूतभौतिकजीवतः ॥ ८ ॥
पृथग्भूतमुपासीनो भवेत् तेनामृतः क्रमात् ।
शान्तिपाठः षष्ठ एवमात्मषट्कार्थसङ्ग्रहः ॥ ९ ॥

* * *

## ५. ऐतरेयोपनिषद्गतभगवन्नामावलिः

| | |
|---|---|
| आत्मा | १-१ |
| इदन्द्रः | ३-१४ |
| इन्द्रः | ३-१४ |
| प्रज्ञः | ५-४ |
| प्रज्ञानम् | ५-३ |
| ब्रह्म | ५-३ |

* * *

## ६. मन्त्रगता विशेषशब्दार्थाः

**अन्नम्** - बुभुक्षानिवर्तनक्षमम् अदनीयमोदनादिकम् ।

**अन्नायुः** - अन्नमेव आयुः जीवनं यस्य तादृशः ।

**अशनाया** - बुभुक्षा ।

**आत्मा** - 'अत - सातत्यगमने' इति धातोः निष्पन्नोयं शब्दः । आप्नोतीत्यात्मा । अत्ति सर्वं जगत् इत्यात्मा सर्वसंहरणकर्ता इति । आदत्ते वा सर्वमित्यात्मा । अतति सर्वमित्यात्मा वा ।

**आवसथाः** - आवासस्थानानि । आङ्उपसर्गपूर्वक 'वस-निवासे इति धातोः 'उपसर्गे वसेः' इति सूत्रेण अथः प्रत्यये आवसथः इति रूपम् । त्रय आवसथाः १) जागृद्दशायां चक्षुः २) स्वप्नावस्थायाम् अन्तःकरणम् ३) सुषुप्तिदशायां हृदयाकाशः ।

**इदन्द्रः** - परमात्मा । इदन्द्र इति लोके प्रसिद्धम् परमात्मनः प्रत्यक्षनामग्रहणभयात् इन्द्रमित्याचक्षते ब्रह्मविदः ।

**पिपासा** - पातुमिच्छा पिपासा । जलादिपानेच्छा ।

**मरः** - म्रियन्ते भूतानि यत्र स मरः । पृथिव्यां हि मरणधर्माण एव जायन्तेऽतो जायमाना म्रियन्ते तस्मात् पृथिवी भूलोकः मरशब्देन उच्यन्ते ।

**मरीचिः** - आदित्यकिरणपरिव्याप्तो ह्यन्तरीक्षलोकः ; तस्मात् मरीचिपदभाक् ।

* * *

## ७. भाष्यकर्तॄणां चारित्रम्

### भारद्वाजरामानुजाचार्यः

अयम् आन्ध्रदेशे विजयवाडाप्रान्तवर्ति-मंगल्गिरिनामकक्षेत्रे वसन् श्रीवैष्णवसंप्रदाय-प्रवर्तक आसीत्। नियोगिब्राह्मणाः एतद्वंशीयाः वैष्णवेष्टिसंस्कारेण भगवद्रामानुजीयसम्प्रदायान्तः-पातिनः संवृत्ताः इति प्रसिद्धिः। पूर्वं तुर्लपाटि इति वंशनाम्ना प्रसिद्धानां एतदीयानां अनन्तरं श्रीरामानुजसिद्धान्तानुवृत्तिवशात् 'श्रीभाष्यम्' इति वंशनामप्राप्तिरिति ज्ञायते। एवं एषः श्रीभाष्यं-रामानुजार्य इति च प्रसिद्ध्यति। जगन्नाथार्यस्य पुत्रोऽयं स्ववंशीयादेव श्रीभाष्यं नृसिंहार्यात् विद्यामध्यगीष्ट। स्वकुलगुरोः श्रीवत्सगोत्रोद्भवात् नल्लान् चक्रवर्ति श्रीनिवासाचार्यवर्यात् पंच-संस्कारनविन्दत। दशोपनिषदामपि प्राचीनविशिष्टाद्वैतभाष्यानुसारेण प्रतिपदार्थदीपिकाख्यां संग्रहटीकां विरचितवानसौ औपनिषदार्थजिघृक्षूणां बालानां मार्गप्रदर्शको भवतीति अभि-नन्द्यमिदम्। एतत्कर्तृकाः इतरग्रन्थाः स्वेनैव ईशावास्यटीकादौ निर्दिष्टा इति नेह विस्तरः। प्रायः सर्वे ते ग्रन्थाः मुद्रिताः। परमवैदिकसिद्धान्तरत्नाकराख्यग्रन्थस्तु श्रीवैष्णवसम्प्रदायाचारादिप्रबोधकः प्रामाणिकः प्रथते। अस्य जीवनकालस्तु (क्रिस्त) १७९० प्रभृति १८८० पर्यन्तमिति ज्ञायते॥

### रङ्गरामानुजमुनिः

'चतुष्षष्ठिप्रबन्धनिर्माता', 'दशोपनिषद्भाष्यकारः' इति अस्य महती प्रशस्तिः। विशिष्टाद्वैतमतरीत्या उपनिषदां भाष्यं अनेन विरचितम् इति अस्य वैभवं निरतिशयम्। जन्मस्थानं तिरुपतिः, लक्ष्मीपुरशाखीयनल्लान् वंश्यः, छन्दोगः, श्रीवत्सगोत्रोद्भवः अयम्। विद्यागुरुः वात्स्य अनन्ताचार्यः, परमगुरुस्तावत् ताताचार्यः। संन्यासदीक्षागुरुस्तावत् श्रीज्ञानाब्धिब्रह्मतन्त्र-परकालमुनिः। पूर्वाश्रमस्य नाम तावत् वरदविष्ण्वाचार्यः। सोऽयम् आचार्यः केवलं भिक्षाकाले श्रीदेवाधिराजदिव्यालयसन्निधिवीधिं प्रति गच्छन् अन्यदा श्रीदेशिकदीपप्रकाशमन्दिरसमीपे आश्रमे वसन् विरचितवेदान्तग्रन्थनिर्माणः महाविरक्त इति वदन्ति। अस्य जीवनकालस्तु १६७०-१७५० इति ज्ञायते। अस्य ग्रन्थेषु अप्पय्यदीक्षितः, दोड्डयाचार्यश्च उल्लेखितः। दीपप्रकाश-सन्निधौ ग्रन्थरचनानिर्माणकाले कदाचित् महाचार्यः एतस्य सविधमेत्य 'अहो मकरन्दास्वादमहिमा' इति शश्लाघ इति, तच्छ्रुत्वा 'श्रीमद्भिः मक्षिकासु भर्त्सितासु मकरन्दास्वादे कोऽन्तराय' इत्यनेन प्रत्युक्तमिति किंवदन्ती। एतान् श्लाघितवन्तः दोड्डयाचार्यः न, किन्तु सुरपुरं वेङ्कटाचार्याः इति केचित् वदन्ति।

अस्य सम्प्रत्युपलभ्यमानाः कृतयस्तावत् -

१. केन २. कठ ३. प्रश्न ४. मुण्डक ५. माण्डूक्य ६. तैत्तिरीय ७. ऐतरेय ८. छान्दोग्य ९. बृहदारण्यक १०. मन्त्रिका ११. अथर्वशिखा १२. कौषीतकी १३. श्वेताश्वतर

१४. अग्निरहस्यानां भाष्याणि १५. श्रीभाष्यव्याख्या मूलभावप्रकाशिका १६. श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका १७. विषयवाक्यदीपिका १८. शारीरकशास्त्रार्थदीपिका १९. न्यायसिद्धांजनटीका २०. तिरुप्पल्लाण्डु २१. तिरुप्पावै २२. तिरुवाय्मोळि इति द्रमिडप्रबन्धानां संस्कृतानुवादश्च। इमाः मुद्रिताः।

अमुद्रिताः कृतयः -

१. कण्णिनुण् शिरुत्ताम्बु व्याख्या २. रामानुजसिद्धान्तसारसङ्ग्रहः ३.पुरुषसूक्तभाष्यम् ४. तत्त्वनिष्कर्षः ५. महोपनिषद्भाष्यम् ६. रहस्यत्रयव्याख्या तात्पर्यकौमुदी ७. प्रतितन्त्रपरिष्क्रिया ७. ईशावास्यव्याख्या भावदीपिका। अन्यास्तु कृतयः काः इत्यन्वेषणीयम्* ॥

## रामानन्दमुनिः

ग्रन्थेऽत्र मुद्रितस्य आनन्दभाष्यस्य सरससरलशैलीसंपन्नस्य लेखकोऽयमाचार्यः प्रयागक्षेत्रे लब्धजन्मा काश्यामासीत् अध्यात्मतत्त्वप्रवचनं कुर्वाणः, इति ज्ञायते। क्रिस्तशताब्देषु १३००-१५०० मध्यकालो अस्य स्थितिरिति सम्भाव्यते। श्रीरामचन्द्रस्य अपरावतार इति शिष्यैः सम्भावितवैभवोऽयं गुरुवरः बोधायनश्रीवैष्णवसम्प्रदायानुसारीति प्रसिद्धिः। विद्यागुरुः सन्न्यासाश्रमप्रदश्च अस्य श्रीराघवानन्दयतिवरः। एतत्सम्प्रदायनिष्ठाः श्रीराममेव परं देवं मन्यमाना आराधयन्ति। वादीभपंचानन इति वैराग्यवारिधिरिति च अयं विपुलं प्रशस्तिमविन्दत।

प्रसिद्धाः गोस्वामितुलसीदासः, मीराबाई इत्याद्याः बहवोऽस्य भक्ताग्रगण्याः शिष्याः। सर्वं भारतवर्षं अटाट्यमानोऽसौ श्रीवैष्णवसम्प्रदायप्रचारं भूयसा व्यधित। प्रश्नोपनिषद्वत् ईशावास्यवदेव इतरासामपि उपनिषदां भाष्यं प्रणीतवानेषः ब्रह्मसूत्राणां भगवद्गीतायाश्च भाष्यमररचत् यदद्य तत्संप्रदायस्थैः परमप्रमाणतया अधीयते ॥

## गोपालानन्दयोगी

इडारदेशे टोरडाग्रमे शुक्लयजुर्वेदीयमाध्यन्दिनशाखायां ब्राह्मणकुले अस्य महामुनेः योगिराजस्य जन्म आसीत्। पूर्वाश्रमस्य नाम खुशालभट्टः इति। कुशलाम्बामुक्तारामौ अस्य पितरौ। सकलशास्त्रपारङ्गतप्रज्ञोऽयं; स्वामिसहजानन्दसकाशात् लब्धसन्यासदीक्षः। स्वामिनारायणसेवाहेवाकस्सन् वडतालक्षेत्रे समाधिमविन्दत। निसर्गत एव विरक्तोऽयम्। बाल्य

* आधारग्रन्थाः - 1) केनाद्युपनिषद्भाष्यम् - उत्तमूर् वीरराघवाचार्यसम्पादितम् तिरुपति - १९७२
2) शारीरकशास्त्रार्थदीपिका - व.न. कृष्णमाचार्यसपादिता, कुम्भघोण - १९१५

एव अस्य योगप्रवणतां दृष्ट्वा सर्वे एनं 'योगिन्द्र' इति प्रथयन्तिस्म। महायोगी अयं योगाभ्यासेन भगवत्साक्षात्कारकारीति जनश्रुतिः। अस्य जीवनकालस्तु क्रि.श. १७८२ प्रभृति १८५२ पर्यन्तम्। अस्य च योगप्रभावाः बहवः श्रूयन्ते। कदाचित् अनेन अनावृष्टिपीडितप्रदेशः योगशक्त्या जलसमृद्धिमान् अकारि। सकलप्राणिवर्गस्य शान्तिं व्यतेने च। श्रूयते च -

उग्रानावृष्टिपीडां क्वचन जनपदे सम्प्रवृद्धां चिराद्यो
योगैश्वर्यप्रभावात् सपदि समधिकोद्भूतवृष्टिप्रपातैः।
सर्वांशेनापनीय व्यतनुत सकलप्राणिवर्गस्य शान्तिं
गोपालानन्दनामा स दिशतु कुशलं नः सदात्राप्यमुत्र॥

इति। स्वयोगमहिम्ना कंचित् मूकमपि पारसीकप्रभोः बालं वाचालं कृतवानिति च प्रसिद्धिः।

१. दशोपनिषद्भाष्यम् - सुबोधिनी २. ब्रह्मसूत्रदीपिका ३. गीताभाष्यम् ४. श्रीकृष्णाभिप्रायबोधिनी (भागवतैकादशस्कन्धव्याख्या) ५. श्रुत्यर्थदीपिका (वेदस्तुतिव्याख्या) ६. अन्वयार्थप्रकाशिका ७. शुकाभिप्रायबोधिका (भागवतद्वितीयस्कन्धव्याख्या) ८. निगूढार्थप्रकाशिका (भागवतदशमस्कन्धव्याख्या) ९. धर्मदेवपूजाविधिः १०. भक्तिसिद्धिः ११. विवेकदीपः १२.विष्णुयागपद्धतिः १३. भक्तिदेवीपूजाविधिः १४. हरिभक्तिनामरत्नावळी १५.पुराणोक्तश्रीकृष्णपूजा १६. हनुमत्पूजाविधिः इत्यादयः बहवोऽस्य प्रबन्धाः पाण्डित्यप्रकर्षप्रख्यापकाः समुल्लसन्ति। तथा हिन्दी-गुजरातीभाषायां विरचिताः बहवो ग्रन्थाः समुल्लसन्ति* ॥

* * *

* आधारग्रन्थः - ब्रह्ममीमांसा - मुक्तानन्दमहामुनिविरचिता। प्र.भ. अण्णङ्गराचार्येण सम्पादिता। श्रीस्वामिनारायणमन्दिरम्, वडताल् १९५२। प्रस्तावना पुटसंख्या ५२.

# ८. सङ्केताक्षरसूचनी

| | |
|---|---|
| ऐ.ब्रा. | ऐतरेयब्राह्मणम् |
| कठ. उ. | कठोपनिषत् |
| केन.उ. | केनोपनिषत् |
| कौषी.उ. | कौषीतक्युपनिषत् |
| छां.उ. | छान्दोग्योपनिषत् |
| तै.ना. | तैत्तिरीयनारायणोपनिषत् |
| तै.आन. | तैत्तिरीयोपनिषत् आनन्दवल्ली |
| धा.पा. | धातुपाठः |
| पु.सू. | पुरुषसूक्तम् |
| बृ.उ. | बृहदारण्यकोपनिषत् |
| ब्र.सू. | ब्रह्मसूत्राणि |
| भ.गी. | भगवद्गीता |
| महाभा.मोक्ष. | महाभारतमोक्षधर्म |
| महो. | महोपनिषत् |
| मुं.उ. | मुण्डकोपनिषत् |
| लिङ्ग.पु | लिङ्गपुराणम् |
| श्वे.उ. | श्वेताश्वरतोपनिषत् |
| सुबा.उ. | सुबालोपनिषत् |

* * *

